# अथ कैवल्यगाथा प्रारंभः

श्रीः ।

# जयसच्चिदानंद ।

श्रीकैवल्यधाम निवासी कृष्णानंद सरस्वती कथिता श्रीमत्परमहंस परिव्राजकाचार्य श्रीपद्मनाभानंद सरस्वती श्रीशिव कैवल्य श्रीमदायुष्मन्नर कैवल्य पुण्य पुंज समुद्भूता श्रीकवल्यगाथा कामधेनु स्तदुपासकेन लाल शंकर सूनुना हरिकृष्ण शर्मणा नागर वंशावतंसेन श्रीकाश्यां कैवल्यपदव्यां हितचिंतक यन्त्रालये संमुद्रिता तुष्यंतु शुध्धशबल रसविदो ऽभिलाषिणश्चे तिशमृश० १८२४ सं. १९५९ कार्तिक शुक्ल द्वादश्यां गुरौ ।

जयसच्चिदानंद गोविंद

धीश्रीसंगतिवित्प्रौढौनरनरायणावृषी ॥
कोनत्वंदेतमतिमानूननंदत्तद्वचःसुकः ॥ १ ॥

अथश्रीमद्भगवद्गीतायांनीतिधर्मात्मज्ञानतदधिकारिव्यव स्थापिकायामुपसंहारवाक्यं सर्वधर्मान्परित्यज्यमामेकंशरणंब्र ज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचइति ॥

उपसंहारेपरामृष्टेसर्वंशास्त्रंपरामृष्टंभवतीतिन्यायेनतत्परामृ शामः ॥ कःप्रसंगोभगवतः सर्वधर्मपरित्यागकथनेऽनुपदमेवोक्तं स्वयमेव ॥ एतान्यपितुकर्माणिसंगंत्यक्काफलानिच ॥ कर्तव्या नीतिमेपार्थनिश्चितंमतमुत्तममिति ॥ नापिपृष्टमर्जुनेनसर्वधर्म

कै, परित्यागः कर्तव्योनवेति ॥ यदिसर्वधर्मपरित्यागएवोपदिष्टःतर्हि गा.
कथंभवेत्धर्मस्थापनं ॥ यदिधर्मस्थापनंतदाकथंसर्वधर्मपरित्यागो
१ पदेशः ॥ अत्रबीजमन्वेष्टव्यमान्विष्टंवास्यात् ॥ नापृष्टोपदेशःसं
भवति ॥ यथापृष्टंतथोत्तराणिदत्तानिभगवता ॥ क्षत्रियाणांनसंन्या
साधिकारइतिचबोधितं ननिराग्निर्नचाऽक्रियइति ॥ तर्ह्यग्निसमारो
पशास्त्रस्यनावकाशस्तथाशिखासूत्रत्यागशास्त्रस्यापि ॥सत्यंक्षत्रि
येष्वनवकाशः कर्मण्येवाधिकारस्तेइति धर्म्यात्धियुत्धाच्छ्रेयोन्य
त्क्षत्रियस्यनविद्यतइतिचवाक्यांतरात् ॥ तस्मात्काम्यानांकर्म
णांन्यासंसंन्यासंकवयोविदुः ॥ सर्वकर्मफलत्यागंप्राहुस्त्यागंविच १
क्षणाइतिपृथक्कृतिः ॥ कर्मणांकाममूलत्वं ॥ कामश्चैषणाचपर्या

यः ॥ एषणात्यागोहिसंन्यासः ॥ नैष्कर्म्यसिद्धिंपरमांसंन्यासेना
धिगच्छतीतिवाक्यशेषात् ॥ संन्यासस्यमहाबाहोतत्वमिच्छामि
वेदितुं ॥ त्यागस्यचहृषीकेशपृथक्केशिनिषूदनेतिसंन्यासत्यागपार्थ
क्यजिज्ञासायांकाममूलसर्वकर्मणांत्यागः संन्यासइतरेत्यागविशे
षा इति ॥ अत्रकवयोविचक्षणामनीषिणस्त्रयोधिकारिणोनिर्दि
ष्टाःक्रमेणब्राह्मणक्षत्रविशस्तत्रब्राह्मणः संन्यासेऽपरौद्वौत्यागेऽधि
कृतावितिव्यवस्थायांप्राप्तायांकश्चिमतनुरुंधानंशिखासूत्रत्यागशा
स्त्रमग्निसमारोपशास्त्रंचब्राह्मणेषुचरितार्थंप्रतिबंधाभावादधर्म्या
नभिधानात्ब्राह्मणाःप्रव्रजंतीतिश्रुतेश्च ॥ तस्मादुपन्यस्तवाक्ये
कवयोब्राह्मणाः ॥ ज्ञानकर्मणोरसमुच्चयात् ॥ तस्मात्लोक

द्वयविदोविचक्षणाः क्षत्रियाःसमुच्चयावलंबिनः तथाधिकारात् ॥
जनकादिवत्फलत्यागपराः ॥ तत्रसंमतिर्भगवतइदानीमावयोः
क्षात्रियत्वान्निश्चितंमतमुत्तममिति ॥ उत्तमत्वंतुयुद्धप्रसंगेक्लैब्यां
गीकारप्रसंगाभावात् ॥ अतएवाहनियतस्यतुसंन्यासः कर्मणो
नोपपद्यते ॥ मोहात्तस्यपरित्यागस्तामसः परिकीर्तितइति ॥
तमोधर्मः क्लैब्यंनियतंचयुद्धं ॥ तथाचनीतिः पुराणी ॥ असंतुष्टा
द्विजानष्टाःसंतुष्टाश्चमहीभुजः ॥ सलज्जागणिकानष्टानिर्लज्जाच
कुलांगनेति ॥ संन्यासोनामसंतोषधर्मः सचब्राह्मणानामेवयुक्तो
ऽन्यस्यपरधर्मोभयावहइति मनसिनिदधतापिसर्वधर्मपरित्यागः
कथमुपदेष्टव्यइति विचक्षणानामैहिकामुष्मिकज्ञानवतांकोटिप्र

विष्णस्यभगवतः संमतेरर्थोवेदितव्यः ॥ एकवाक्यत्वायमनीषिणो
व्यवहारचतुराविशः सभ्याएतल्लोकचतुरास्तेषांमतंपरिशिष्टं दुष्ट
कर्मपरित्यागः त्यागइतिनिमग्नामाभूदग्रेनौरितिव्यवहाराविदां
तदुपन्यासः ॥ सत्येवंकोवकाशोभगवतो मन्मनाभवमद्भक्तोमद्या
जीमांनमस्कुरु ॥ मामेवैष्यसिसत्यंतेप्रतिजानेप्रियोसिमेइतिवि
धिवचनानिसफलानिब्रुवतइति चेदस्तुचोदनालक्षणार्थोधर्मइति
लक्षणसमन्वयो ॥ नतद्विरोधलेशोपि ॥ यस्मात्प्रथमाध्यायेदत्तो
ऽवकाशः पार्थेनसमानानामुत्तमश्लोकोभवतीतिश्रुतिमनुस्मृत्य
स्वजनंहिकथंहत्वासुखिनःस्याममाधवेतिशंकामुत्थाप्ययुत्धेस्वपर
विचारस्यासांप्रतत्वेऽपिदृढंपूर्वपक्षमुपन्यस्तवान् ॥ यद्यप्येतेनपश्यं

तिलोभोऽपहतचेतसः ॥ कुलक्षयकृतंदोषंमित्रद्रोहेचपातकं ॥ कथं
नज्ञेयमस्माभिःपापादस्मान्निवर्तितुं ॥ अस्माभिःसमावर्तनसम
 येगुरुभिरध्यापितांप्रजातंतुमाव्यवच्छेत्सीरितिश्रुतिंजानानैः ॥
अस्तुमित्रद्रोहःपुनःमैत्रीप्रसंगात् ॥ अतएवसंनिहितमासीत् ॥
कुलक्षयेदोषंविशदयति ॥ कुलक्षयकृतंदोषंप्रपश्यद्भिर्जनार्दन ॥
कुलक्षयेप्रणश्यंतिकुलधर्माःसनातनाः ॥ धर्मेनष्टेकुलंकृत्स्नम
धर्मोऽभिभवत्युत ॥ अधर्माऽभिभवात्कृष्णप्रदुष्यंतिकुलस्त्रियः ॥
स्त्रीषुदुष्टासुवार्ष्णेयजायतेवर्णसंकरः ॥ संकरोनरकायैवकुलघ्ना
नांकुलस्यच ॥ पतंतिपितरोह्येषांलुप्तपिंडोदकक्रियाः ॥ दोषै 
रेतैःकुलघ्नानांवर्णसंकरकारकैः ॥ उत्साद्यंतेजातिधर्माःकुलध

र्माश्चशाश्वताः ॥ उत्सन्नकुलधर्माणांमनुष्याणांजनार्दन ॥ नर
केनियतंवासोभवतीत्यनुशुश्रुमेति ॥ जातिधर्मेषुकुलधर्मेषुनष्टेषु
मनुष्यमात्रेपर्यवसितएषउपप्लवः ॥ अहोबतमहत्पापंकर्तुंव्यवसि
तावयं ॥ यद्राज्यसुखलोभेनहंतुंस्वजनमुद्यताः ॥ पूर्वपक्षमेवं
समाप्यवर्णसंकरहेतुताप्रतिपक्षिष्वेवास्त्वित्याह ॥ यदिमामप्र
तीकारमशस्त्रंशस्त्रपाणयः ॥ धार्तराष्ट्रारणेहन्युस्तन्मेक्षेमतरं
भवेत् ॥ इमांशंकांयावन्नसमाधास्यसितावन्नचापंबिभर्मिइति
पार्थाभिप्रायंसंजयउवाच ॥ एवमुक्त्वाऽर्ज्जुनःसंख्येरथोपस्थउपा
विशत् ॥ विसृज्यसशरंचापंशोकसंविग्नमानसः ॥इति॥ अत
एवउत्तिष्ठोत्तिष्ठतिभूयःप्रतिबोधितोऽपिक्लैब्यंमास्मगमः पार्थेति

कोपितोपिनोतस्थौतस्मात्कलिप्रसारशंकांयावन्नसमाधास्या मि
तावदयंनरोऽपिनोपतिष्ठेदितिविज्ञायलिंगैराह ॥ सर्वधर्मान्परि
त्यज्येति ॥ येकेचिज्जातिधर्माःकुलधर्माश्चतेकलेःपंचसहस्रांते
मुमूर्षवोभविष्यंतिनाधुनानतत्रत्वंनिमित्तं ॥ कस्मादेतत्तदाह
मामेकंशरणंव्रजेति ॥ सर्वविश्वस्यरक्षितारंमामेकमेवविद्धिपंच
सहस्रांतंजातिधर्मान्कुलधर्मांश्चपालयिष्यामि ॥ कस्मात्तदंतता
त्तदाह ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामि ॥ त्वयिधर्मोपप्लव
निमित्ततामाभूदिति ॥ तर्ह्युपप्लवएवमाभूदितिचेत्त्वंतुमाशुचः
कालचरित्राणिनरोद्धुंशक्यंतेयेशक्नुवंतितेधुरीणाः यथाश्रीशंक
रःयथावाभवान् ॥ धर्मोपप्लव निमित्ततातुधार्तराष्ट्रेष्ववतरति ॥

नत्वयिनमपि ॥ खलशासनमात्रमावयोःकर्मप्रकृतं ॥
तद्विज्ञायाह ॥ नष्टोमोहःस्मृतिर्लब्धात्वत्प्रसादान्मयाच्युत ॥
स्थितोऽस्मिगतसंदेहःकरिष्येवचनंतवेति ॥ प्रकृतेत्वदुक्तन्या
यान्मोहोवर्णसंकरनिमित्तामोहोनष्टः स्मृतिश्चावयोरवतारसंके
तस्यलब्धाततोगतसंदेहश्चापमुद्यस्यास्थितोऽस्मिअधुनाउत्थितोऽ
स्मितववचनंकरिष्येइतिधनुष्टंकारंकृतवान्ईदृशः संशयच्छेत्ता
कस्त्वदन्यइतिक्षात्रनमस्कारं ॥ जातिसंरंभंमोहस्थगितमपिवेदकृ
ष्णोऽधुनाऽर्जुनः ॥ तस्मात्सर्वधर्मानितिवाक्यस्योभयैकवेद्यत्वादु
क्तं ॥ इदंतेनातपस्कायनाभक्तायकदाचन ॥ नचाऽशुश्रूषवे
वाच्यंनचमांयोऽभ्यसूयतीतिशपथचतुष्टयरूपं ॥ यइदंपरमंगुह्य

कै.
मित्यादिसंवादस्वरूपमधिकारिफलंनिर्दिष्टंततएषपरामर्शः ॥ गा.
५ कृष्णभक्तेषुसमर्पितोभक्तप्रियः श्रीकृष्णस्तुष्यतां ॥ विषादयोगा
दारब्धस्यगीताशास्त्रस्यसंशयत्यागयोगेसमाप्तिरन्यथा विषादा
परिहारात्इतिगीतासूत्रं ॥ संशयमूलोहिविषादः ॥ गुरुप्रसादसं
पन्नः संजयउवाच ॥ इत्यहमित्यादि ॥ गुरुशिष्ययोः कृतकार्य
त्वादन्येषांचतत्संभवात् ॥ याप्रीतिः संजयस्यासीत्तववाचिजग
द्गुरो ॥ साप्रीतिरस्तुमच्चित्तेकिमन्यदवशिष्यते ॥ अध्येष्यतेचय
इमंधर्म्यंसंवादमावयोः ॥ ज्ञानयज्ञेनतेनाहमिष्टःस्यामितिमेम
तिः ॥ इतिभगवदुपसंहारेधर्म्यविशेषणतात्पर्यं संजयउवाच ॥ ५
यत्रयोगेश्वरः कृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयोभूतिर्ध्रुवा

नीतिर्मतिर्ममेति ॥ अतोधर्म्यत्वंगीताध्ययनज्ञानयज्ञश्चेत्युपसंहा
रोधी श्रीसंयोजनसूत्रमितिविश्रामः ॥ इतिश्रीकैवल्यधामनिवा
सिकृष्णानंदसरस्वतीकृतश्रीमद्भगवद्गीताशास्त्रोपसंहारपरामर्शः
संगतिसूत्रमितिशम् ॥ जयगोविंद
जयसच्चिदानंद ॥ श. १८२४ मार्ग. शु. १

नकृष्णेननपार्थेनधार्तराष्ट्राअमीहताः ॥
दौर्मंत्र्यस्यप्रभावोयमितिवैवेदसंजयः ॥ १ ॥
एकवारंशमंयाताःशंकरादमितौजसः ॥
पुनर्बुध्धाःप्रबुधाःस्युस्तदास्याद्वर्णशंकरः ॥ २ ॥

॥ ॐ ॥ श्रीगणेशाय नमः ॥ अथकैवल्यगाथाप्रारंभः ॥ श्रीमद्दे
शिकभूपाल्तथातत्वंतुमेवद ॥ श्रमोनयत्रनोपापंनमोहोनापिचिंत
नं ॥ १ ॥ एतत्तत्वंमहाबुद्धेबुध्यतेचरमेभवे ॥ एतद्विज्ञापयामि
त्वांतत्वायंचरमोभवः ॥ २ ॥ शृणुष्वैकमनाभूत्वाशृण्वन्कैवल्यम
श्नुषे ॥ इहैवतैर्जितःसर्गोयेषांसाम्येस्थितंमनः ॥ ३ ॥ किंवाप
श्यसिविश्वमेतदखिलंस्वप्नेंद्रजालो पमंमायामात्रमचेतनंचिति
भिदाशून्यंशिवेनोशिवं ॥ कालेनानिशमेवयातिचलतांकालश्च
चितोत्थिताश्चिताप्रावरणंविहायझटितिस्वस्थः प्रबुद्धोभव ॥ ४ ॥
ॐकारोनिगमांतशेखरगुरुः किंत्वांनसंबोधयत्याहोस्विच्छ्रुतिरंबि
काकरुणयाचिंतातुरंकातरं ॥ यद्यच्चिंतयासिप्रवृद्धविषयव्यासंगत

१ स्तत्पुराश्चिंताप्रावरणंविहायझटितिस्वस्थःप्रबुद्धोभव ॥ ५ ॥ किं
नास्तीतिविमर्शनीयमथमकिंचास्तीतिकिंचोभयंकिंवेशादणुतःप्र
धानगुणतःकिंशून्यतःकिंस्वतः ॥ नैवेदंसुविचारणार्हमथकिंचिंतै
वतेताद्दशीचिंताप्रावरणंविहायझटितिस्वस्थःप्रबुद्धोभव ॥ ६ ॥
सामान्यात्मकताविशेषवपुषां यद्वौतमीयेमतमृत्साभिन्नतयावि
भांतिकलशास्तद्रूपतोनोभिदा ॥ सत्सामान्यमिदंतथैवजगदप्ये
कात्मकंनिर्द्वयंचिंताप्रावरणंविहायझटितिस्वस्थःप्रबुद्धोभव ७ ॥
आनंदाअपितेविशेषवपुषःपात्राणिरागाद्विषामानंदान्नविभेदभाज
इतितेप्राङ्न्यायतःशुद्धतः ॥ रागद्वेषकलास्त्वयैवकलिताश्चितातु
रेणैवतच्चिंताप्रावरणंविहायझटितिस्वस्थःप्रबुद्धोभव ॥ ८ ॥ नीरू १

पानपिकालमारुतवियज्ज्ञात्यादिकांस्त्वंयथाजानीषेपरिचायकैर्नि
जगुणैर्भिन्नाननतेलब्धये ॥ ज्ञानेनाचलभास्वतापरिचिनुब्रह्मापि
सूर्यंयथाचिंता० ॥ ९ ॥ गंधाद्याअपिलब्धयेनतुमहीवार्यादयस्तत्र
तेचिंताक्लृप्तिरियंगुणगुिणइतिप्रागल्भ्यमेवात्रते। नोलभ्यागुणिनो
गुणात्परतयाज्ञानात्परंनोपरंचिंता०॥१०॥गंधाद्याःखलुलक्षणान्य
पिमहीवार्यादिरूपाणिचज्ञानंलक्षणमप्रमेयवपुषोरूपंचतत्संश्रय।
तत्रैतज्जगदप्रमेयरचनंगंधेघटाद्यायथाचिंता० ॥ ११ ॥ आदर्शे
प्रतिबिंबितानतुपुनस्तद्भेदभाजोमृषातद्रूपेणवसंतितस्यजठरेऽखं
डाकृतौतेनहि ॥ चैतन्येस्फुरदेकरूपजठरेविश्वंतथाभासतेचिंता
प्रावरणंविहायझटितिस्वस्थःप्रबुद्धोभव ॥ १२ ॥ नाशंनैतिशतै

रपिप्रतिफलैरादर्शकैवल्यकं तद्वत्तेपिजगद्गणैश्चिंतिमहादर्शस्यकैव
ल्यकं ॥ किंवाशब्दशतैः प्रयातिविलयंचाकाशकैवल्यकंचिंता० ॥
॥ १३ ॥ भोसिंध्वादिजलस्थिताउतवनेनानाफलेषुश्चिताःकिंना
नैवरसाःपरंतुकचतेसर्वत्रचैकोरसः ॥ तद्वच्चैकरसेपरात्परतरेसर्वे
रसाः कल्पिताश्चिंता० ॥ १४ ॥ अर्थाः शब्दगणाश्चतेपिविवि
धावर्णानतेनादतोभिन्नाःसप्रणवात्मकः सचपरब्रह्मात्मकःशाश्व
तः ॥ तद्ब्रह्मत्वमसिप्रकाशपरमस्त्वज्ञानभास्योरविश्चिंता० ॥
॥ १५ ॥ त्वत्तःशब्दसमुद्भवस्त्वदुदिताचिंताचताभ्यामिदंविश्वं
भातिचराचरंतवममाहंत्वंप्रकारोल्बणं ॥ तज्ज्ञस्यास्यकथंभवेद्वि
षयतानेतीतिवेदस्यनोचिंता० ॥ १६ ॥ तृप्तेर्नादसमुद्भवःसचमहा

नंदैकबोधद्युतिस्तारात्माततएववेदानिवहस्तस्यावसानेपिसः ॥
आनंदेलयमेतिचित्तसहितोगानंयथाशिक्षितंचिंता० ॥ १७ ॥
आनंदान्नविभेदमं चतिमहानंदैककंदांकुरस्तारस्तारयतिस्वकैरव
यवैर्विश्वस्यसत्ताविषं ॥ पायंपायमहोमहासुखघनेत्वय्येकतांसं
भजंश्चिंता० ॥ १८ ॥ सूर्याचंद्रमसोस्तथाहुतवहेतेजोस्तितन्माम
कंविद्धीत्याहजनार्दनोनचतमोनीलंनपीतंसितं ॥ किंतुस्वच्छस
मंविभासयतियद्रूपाणितद्ब्रह्मचिच्चिंता०॥१९॥ निर्दोषंसममेवत
त्वमितिसप्राहप्रसन्नाननःश्रीकृष्णःकरुणारसार्द्रहृदयस्तद्वेदिनःपं
डिताः॥वैषम्यंबतचिंतयागुरुकृपालेशेनशून्यस्यतेचिंता०॥२०॥अ
स्तीत्याहजगज्जनुः सहनकृद्धीजंतुसर्वोजनस्तत्सामान्यमवेहितत्र

निखिलाःक्लृप्ताविशेषास्त्वया।अव्यक्तात्प्रभवंतिचाहनिघनेचित्ते
३ निशायांनतेचिंता०॥२१॥पृथ्वीगंधघनारसेनसघनोगाढोरसोरूप
तोरूपंस्पर्शघनंघनः सवचनैर्वाह्लादगाढामता॥नादोनंदघनस्तदेव
परमंब्रह्मेतिचैकंघनंचिंता० ॥ २२ ॥ वाचैवास्त्वथमाययाऽणुभि
रथप्राधानिकंब्रह्मवा।किंवातेनभवेच्छृणुष्ववचनंचिंतांत्यजालंद्रुहं॥
तत्कैवल्यपदंरमस्वसहसातत्रैववाविश्वंकवाचिंता० ॥ २३ ॥ मूर्खः
प्रावृतिमार्जनेनविगलन्मालिन्यांचिंतांभजेद्विज्ञःप्रावृतिमार्जनेनच
पुनस्तत्यागतोवासुखी॥चिंताजर्जरकंथिकातवबहुव्यासक्तमालि
न्यधृक्चिंता० ॥ २४ ॥ आकाशोनुसृतः परैरपिमहाभूतैर्विभु
त्वाघदागाढत्वंकथमंजसैवघटतेविश्वस्यतथ्यंवद ॥सत्यंवच्म्यवि ३

चारतस्तवघनाश्चिंतैवतन्नोघनंचिंता० ॥ २५ ॥ देवंतंभजाचिंतया
विरहितस्याविस्तरांयोभवेच्चिंतां संहरतेकथंवदसखेचिंतामपेक्षेत
यः ॥ तस्तात्वंविदितादथोअविदितादन्योसिदेवोमहांश्चिंता० ॥
॥ २६ ॥ चिंतायाद्दढतैवजागृतिरथोशैथिल्यमेवस्वपिः सौषुप्तं
घनतैवविश्वमखिलंचैतत्त्रयान्नोपरं॥तत्त्यागः परमः पुमर्थइहते
कैवल्यसंदायकश्चिंता०।२७। कैवल्यंसहजंतवास्तिमहिषश्चिंतोत्थि
तस्तत्तनोर्मज्जांभुंक्ष्वमहाचितिंसुमधुरांदत्तादिभिः सेवितां ॥ मद्वा
णींमहिषासुरप्रमथनींसंस्थाप्यहृन्मंदिरेचिंता० ॥ २८ ॥ हत्वैतौ
मधुकैटभौविधिनिषेधाख्यौ मलौकर्णयोरेकाब्धौनिगमांतनेतिव
चनागस्येमहाहौवस ॥ कर्तृत्वंतवनेतिमेशुभवचः पंक्तिभजन्का

लिकांचिंता० ॥ २९ ॥ वाणीत्वंतदसिप्रकाशपरमंद्दश्येप्रमाणंय
थाऽदर्शः स्वप्रतिबिंबितेष्विति महापूर्वासरस्वत्युमा ॥ विक्षेपा
वरणौनिहंतिकलिताशुंभंनि शुंभंक्षणािंचता० ॥ ३० ॥
विश्वंवाग्जनितंचकामविधृतं ब्रह्मात्मकंनिर्भयंनोत्पन्नंनचनाशमे
तिसहसाचिंतेतिबोधप्रदां ॥ बालांतेप्रदिशामिपालयसदात्वंसाव
धानोयतेचिंता० ॥ ३१ ॥ गंधादीनिघटादिकंप्रतिवसंत्यात्मश्रयं
स्फोरयंत्यज्ञातंनविकुर्वतेत्वयितथाम्नायेतिविद्मोवयं ॥ चिंताजी
वनिकानतेजवनिकात्रस्तोसिचेच्छ्रूयतांचिंता० ॥ ३२॥ तत्वंत्वद्व
यमेवविस्मरसखेद्वैतंयथाहेमकंबुध्वाविस्मरसिप्रियंदृढतरंप्राग्बुद्ध
धातुंयथा ॥ चिंतांमाकुरुशास्त्रजन्यसुमतिध्वंसैकदीक्षाधरांचिंता

प्रावरणंविदार्यझटितिस्वस्थःसुखीत्वंभव ॥ ३३ ॥ अस्त्येवानुभ
वोनुभूतिविषयोप्यस्तीतिचेदुच्यतां वैलक्षण्यमपींद्रजालजगतो
र्विस्मृत्यजालक्षणं ॥ शास्त्रंविस्मृतमेवबोधयतिचेद्विस्मृत्यविश्वे
क्षणंसिद्धंस्वंस्मरविस्मृतिस्मृतिपदंकिंवातयाचिंतया ॥ ३४ ॥
एकंसंस्मरतोपरत्रनमनोगच्छेन्मृषात्वेकुतः सत्यत्वंयदविस्मृतेर्ज
निजुषोविश्वस्यकस्माद्भवेत् ॥ एतद्बोधघनत्वमुक्तपदवीतत्राभिषे
कंस्वयंस्वीकृत्येतरचिंतनंजहिशिशोस्वाराज्यमंगीकुरु ॥ ३५ ॥
यज्ज्ञातंतदभून्नभावितुपुनर्विज्ञायतेकैरपिप्रारब्धंत्विह भुज्यतेनक
रगंतच्चेश्वरायत्तकं ॥ योगक्षेमवहोहरिर्विजयतेकर्मापितच्चापिनो
चिंताप्रावरणंप्रदह्यसहसाभस्मांगरागोभव ॥ ३६ ॥ पारोक्ष्यं

कल्पयित्वाप्रथमपुरुषकः कल्पयित्वापरोक्षाध्यक्षत्वेमध्यमस्त्वंभ
५ वासितदुभयंदूरयित्वोत्तमोभूः॥त्वामेवस्तौतिकृष्णःसकलनरसखः
सर्ववेदार्थवेत्ताऽवस्थासाक्षीपरात्मेत्यतइदमुदितंसत्यमेवेतिविद्धि॥
॥ ३७ ॥ दृश्यंनास्तित्वमेवासितस्मात्वंब्रह्मनिर्भयं ॥ इतिबोध
यतेतारः सर्ववेदार्थसंग्रहः ॥ ३८ ॥ इतिश्री कैवल्यधामनिवासि
कृष्णानंदसरस्वतीकृत कैवल्यगाथायां सर्वशास्त्रार्थ संग्रहोनाम
प्रथमोध्यायः ॥ १ ॥

॥ ॐ ॥ उत्तरात्पूर्वपूर्वंतुक्रमान्न्यूनगुणंमतं ॥ क्षित्यादिवियदं
तंतत्कारणंनिर्गुणंक्रमात् ॥ १ ॥ गंधाकाशोरसाकाशोरूपाकाशे ५
चसस्मृतः ॥ स्पर्शाकाशोरूपवियच्छब्दाकाशेचसस्मृतः ॥ २ ॥

शब्दाकाशश्चिदाकाशेचिदाकाशात्मकंजगत् ॥ अखंडैकघनंवत्स
चिदाकाशंत्वमेवहि ॥ ३ ॥ गंधेपृथ्वीरसेनीरंरूपेतेजोमरुत्स्पृ
शि ॥ शब्देनभःस्वयंज्ञानेकल्पितोग्रेनकिंचन ॥ ४ ॥ द्रव्यसत्ता
यथाजातिसत्तांनिर्वाहयेत्त्वव ॥ तथाविश्वगतांसत्तांब्रह्मनिर्वाहये
न्नकिं ॥ ५ ॥ वत्सकिंबहुनोक्तेनचिंतापाशोहिदुर्जरः ॥ कैवल्य
बोधखङ्गेनतंनिकृत्यसुखीभव ॥ ६ ॥ चिंताविगलितानूनंविश्वं
क्वापिपलायितं ॥ ॐनमःसिद्धमित्येवमंत्रःसिद्धोमयेक्षितः ॥७॥
शेषसुंदरशय्यायांजनार्दनइवापरः ॥ मोक्षलक्ष्मींसमालिंग्याखं
डंभुंक्ष्वसुखंशिशो ॥ ८ ॥ गुरोःपादौकल्पवृक्षौतद्वागस्तीहकाम
धुक् ॥ तत्करश्चातपत्रंमेदुःखवार्ताकुतोमम ॥ ९ ॥ पितृवंशस

मुद्भूतःसंसारंप्रतिपद्यते ॥ गुरुवंशसमुद्भूतोमोक्षमेवाश्नुवान्यहं
॥ १० ॥ प्रतिबिंबाःप्रमाणानिमुकुरेतद्वदेवाहि ॥ शास्त्रंगुरुर्जग
न्मायापीश्वरस्त्वयिनिर्मले ॥ ११ ॥ स्वमर्थाद्विदितादन्यस्तदर्था
दप्यगोचरात् ॥ अन्योस्म्यहंस्वयंज्योतिरखंडोब्रह्मनिर्भयं ॥ १२ ॥
वैराग्यंश्रूयतांचित्तेविषयाणामनागतिः॥सएवपरमोमोक्षःसर्वतीर्थ
कसंमतः ॥१३॥ त्वन्नास्तित्वंश्रुतिर्वक्तिमोक्षदुर्लभताकुतः॥१४॥
इति श्री कैवल्यधामनिवासिकृष्णानंदसरस्वतीकृतकैवल्यगाथा
यांसर्वशास्त्रार्थानुभवारोहोनामद्वितीयोध्यायः ॥ २ ॥ ❀ ॥
ॐ विचारस्त्वन्यविषयव्यावृत्तोदीक्षितः स्मृतः ॥ अतोलभेक्ष
पादत्वंगौतमेनमहर्षिणा ॥ १ ॥ देहंविस्मरकल्याणस्वरूपंस्मर

चिद्घनं॥एतद्धृतंसमालंब्यमोक्षमेवसमश्नुहि ॥ २॥ देहंखलाःस्मा
रयंतिस्वरूपंसाधवोजनाः ॥ खलसंगंपरित्यज्यसाधुसंगंसमाश्रय
॥ ३ ॥नमस्कुरुखलेभ्यस्त्वंसाधुभ्योपिनमस्कुरु ॥पापक्षयःस्वा
त्मबोधोयाभ्यांनिर्वाह्यतेतव॥४॥गुरुप्रसादोबलवान्नतस्माद्बलवत्त
रः॥ यदस्माल्लभ्यतेमोक्षइतरस्मात्तुसंसृतिः॥यथाकामःसुंदरीषुर
मस्वत्वंतथात्मनि ॥ यथाक्रोधःशत्रुनाशेरमस्वत्वंतथात्मनि ॥६॥
यथालोभोधनेपित्र्येरमस्वत्वंतथात्मनि ॥ यथामोहोवेद्यवर्गेरमस्व
त्वंतथात्मनि ॥ ७ ॥ यथामदःसुंदरत्वेरमस्वत्वंतथात्मनि ॥ म
त्सरोन्योन्नतिध्वंसेरमस्वत्वंतथात्मनि ॥ ८ ॥ अहंकारःस्वीयगु
णेरमस्वत्वंतथात्मनि ॥ भूतेभव्येयथाचित्तंरमस्वत्वंतथात्मनि ९

यथाबुद्धिर्वस्तुतत्त्वेरमस्वत्वंतथात्मनि ॥ यथामनोगुणेदोषेरमस्व
त्वंतथात्मनि ॥ १० ॥ यथापृथ्वीक्षमावत्वेरमस्वत्वंतथात्मनि ॥
यथाजलंशीतलत्वेरमस्वत्वं० ॥ ११ ॥ यथातेजस्तमोनाशेरम०॥
यथावायुःस्पंदविधौर० ॥ १२ ॥ यथाशब्दोर्थविज्ञानेर० ॥ यथा
ब्रह्मनिजानंदेर० ॥ १३ ॥ यथैवेंद्रोनिजैश्वर्येर० ॥ यथाकालोभार
वाहेर० ॥ १४ ॥ ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशिवः ॥ एते
यथास्वकृत्येषुरमस्तत्वंतथात्मनि ॥ १५ ॥ पितृरूपेणसृजसिमा
तृरूपेणरक्षसि ॥ गुरुरूपेणोद्धरसितस्मैश्रीगुरवेनमः ॥ १६ ॥ ॐ
नमःसिद्धरूपायसिद्धज्योतिःप्रकाशिने ॥ सिद्धज्योतिःस्वरूपाय
तस्मैश्रीगुरवेनमः ॥ १७ ॥ पितृरूपेणजागर्षिपितृशब्दप्रबोधि

तः ॥ जागृहिब्रह्मरूपेणब्रह्मशब्दप्रबोधितः ॥ १८ ॥ पितृरूपेण
यद्वत्त्वंपुत्रेणसहवर्त्तसे ॥ ब्रह्मरूपेणतद्वत्त्वंवर्त्तस्वजगतासह ॥ १९ ॥
देवरूपेणपाषाणस्तथाजागर्त्युपासितः ॥ तथात्वंब्रह्मरूपेणजागृहि
ब्रह्मशब्दितः ॥२०॥ देवरूपोस्तिपाषाणस्तथाजागर्त्युपासितः ॥
ब्रह्मरूपोसिभोजीवतथाजागर्ष्युपासितः ॥२१॥ महावाक्यप्रतोदं
नजागृतिंनीयसेमया ॥ त्वंब्रह्मासिप्रकाशोसिवत्सजागृहिजागृहि
॥ २२ ॥ वेदाःस्तोतुंसमायाताद्वारितिष्ठंतिबंदिनः ॥ शीघ्रंजागृ
हिविश्वात्मन्योजागारऋचंशृणु ॥ २३ ॥ अधीत्यगौतमींविद्यां
परमाणावतींद्रिये ॥ अधीत्यकापिलींविद्यांतत्प्रधानेप्यतींद्रिये ॥
॥ २४ ॥ अधीत्यनास्तिकग्रंथानूशून्येजागर्तिचेज्जनः ॥ नित्यो

पलब्धेचिद्रूपेजागृतिर्दुर्घटाकथं ॥ २५ ॥ उपलब्धेपियानिद्राविस्मृतिःसाप्रकीर्तिता ॥ मायासाऽनुपलब्धेपिजागृतिःसर्वसंमता ॥ २६ ॥ उपलब्धेजागृतिश्चेदलब्धंविस्मरत्यसौ ॥ तत्कारणकमप्यस्मिन्जागृतिर्द्वैतनाशिनी ॥ २७ ॥ तूष्णींभावान्निजानंदान्नादसंभवइष्यते ॥ विश्रांतिमेतितत्रैवसदसच्चाप्यबोधयन्॥२८॥ तदभिन्नःशब्दगणःसच्चासच्चापिबोधयेत् ॥ नतत्रतस्यतात्पर्यंवर्णनीयंविचारिभिः ॥ २९ ॥ उपक्रमानुसारित्वंयुक्तंचाप्युपसंहृतेः॥ यत्रमृत्स्नोपसंहारस्तद्विकारस्यतत्रहि ॥ ३० ॥ अतोनेतीतिवचनंनेहनानास्तिकिंचन ॥ इतिनादावसानंहिनिषेधत्यखिलंजगत् ॥ ३१ ॥ इत्यभिप्रेत्यनादांतेब्रह्मेतिश्रुतिराहसा ॥ प्रणवेप्रकृ

तौलीनेशिष्टःशिवइतिश्रुतिः ॥३२॥ प्रणवोनादरूपत्वादात्मन्येवा
वसीयते ॥ ज्ञात्वावदसियस्मात्त्वंतस्मात्वंशब्दकारणं ॥३३॥ अ
नंतरंचतद्वेत्सित्वमेवपरमोवधिः ॥ संकेतशक्त्यावर्णास्तुविश्रा
म्यंतिस्वगोचरे ॥ ३४ ॥ संकेतत्यागतोवर्णानादशक्त्यासशक्ति
काः ॥ घटशक्तौविलीनायांमृत्स्नाशक्तिर्नहीयते ॥३५॥ अतएवम
हावाक्यंसंकेतत्यागमात्रतः ॥ नादशक्त्याब्रह्मशुद्धंबोधयेद्वागगो
चरं ॥३६॥ नादःसहजशक्त्यैवबोधयेद्वागगोचरं ॥ गंधःसहजश
क्त्यैवपृथिवींबोधयेद्यथा ॥३७॥ आदर्शप्रतिबिंबस्तुसहजंबोधयेद्य
था ॥ मात्रात्रयपरित्यागेयच्छिष्टंतत्परीक्षय ॥३८॥ सार्धमात्रास
प्रणवःसनादःपरिकीर्त्तितः ॥ सबोधयेत्परंब्रह्ममनोवाचामगोचरं॥

अवस्थात्रयसंत्यागेयःशिष्येत्तपरीक्षय ॥३९॥ परीक्षितेसएवत्वंभू
त्वाजानासितत्परं॥ब्राह्मण्यज्ञानलिप्साचेद्ब्राह्मणेनैवभूयते॥४०॥
ब्रह्मत्वज्ञानलिप्साचेद्ब्रह्मणैवहिभूयतां ॥ चिदाकाशेवाङ्मयीयं
विद्युत्कचकचायते ॥ ४१ ॥ आकाशमविकुर्वाणादर्शयंतीनभः
श्रियं ॥ सत्वचित्वसुखत्वानिपर्वतान्भेत्तुकामुकी ॥ ४२ ॥
भित्वाकुत्रापिलीयेततद्वक्तुंकेनशक्यते ॥ तत्कैवल्यपदंविद्धिलभ्य
तेचरमेभवे ॥ सएवसर्वशब्दानामर्थोतोहमितिस्मरेत् ॥ ४३ ॥
परावागियमेवास्तिप्रकाशात्मप्रकाशिनी ॥ प्रकाशैक्यंसमापन्ना
पराप्रासादउच्यते ॥४४॥ शिवशक्त्यैकतापीयंमोक्षोयंसुखशेव
धिः ॥ दृश्यंनास्तित्वमायातंनिशीथोघनतांगतः ॥ ४५ ॥ आ

त्मापिचंडमार्तंडोमध्यदेशस्थितिंगतः ॥ किंनिशीथमहंवच्मिाकि
महर्वाब्रवीम्यहं ॥ ४६ ॥ श्रीगुरोर्वाक्चमत्कारमहिमाकेनवर्ण्य
ते ॥ मानिशीथंब्रूहिवत्समाहर्वाब्रूहिसन्मते ॥ ४७ ॥ कृतकृत्य
त्वमापन्नस्तूष्णींतिष्ठहसाथवा॥ सर्वंजगत्कवलितंमातात्वमसिहे
गुरो ॥ ४८ ॥ विज्ञापितंवागतीतंपितात्वमसिहेगुरो ॥ अभीष्टंफ
लमापन्नंकल्पस्त्वमसिहेगुरो ॥४९॥ चिंतितंस्वस्थलेप्राप्तंगुरोचिं
तामणिर्मम॥तवांतंनैवजानामिवार्धिस्त्वमसिहेगुरो॥५०॥उपा
स्यदेवंतवत्वमतस्तेकरुणेदृशी ॥ कांकुर्यांतवहेनाथसेवांतृप्तस्यस
र्वदा ॥ ५१ ॥ पादुकांदेहिमेशीघ्रंधारयेशिरसासदा ॥ यथादि
ष्टंशिरःस्थेनगुरुणाज्ञानमूर्तिना ॥ ५२ ॥ तथाहृदिस्थदेवेनलिखि

तंस्वात्मतृप्तये ॥ योयथावेत्तियत्तत्वंसवोंलिखातितत्तथा ॥ ५३ ॥
रसोपलब्धिश्चेत्तत्रनत्रस्यातिबुधोजनः ॥ दिदृक्षाचेदस्तितवप्र
तिश्लोकंपरीक्षय ॥ ५४ ॥ सहसैवगुणोदोषोनप्रकाशेतकर्हि
चित् ॥ पदार्थोद्विविधोलोकेशब्दोर्थश्चेतिसंमतः ॥ ५५ ॥
अर्थमात्रंशब्दभास्यंशब्दभास्येक्वसत्यता ॥ प्रमाणंचप्रमेयंन्नप्रमा
शब्देनभासते ॥ क्वप्रमाणंक्वप्रमेयंक्वप्रमाक्वप्रमातृता ॥ ५६ ॥
शब्दमात्रैकभासानांक्वसत्ताक्वचभास्यता ॥ तस्माद्वाङ्मात्रमि
त्येवमंतव्यंसर्वतैर्थिकैः ॥ ५७ ॥ वाचारंभणमित्येवमतोवक्तिश्रु
तिर्जनान् ॥ संकेतशक्तिःसंत्यक्तुंशक्यतेलक्षणास्त्विव ॥ ५८ ॥
सर्वसंकेतसंत्यागेतूष्णींशब्दगणःस्थितः ॥ तदानादस्वरूपेण

सर्वःशब्दगणःस्थितः ॥ ५९ ॥ नादःस्वघनतांयातस्तद्विष्णोः परमंपदं ॥ संकेतस्मरणंसाधोऽप्युत्थानस्यैवकारणं ॥ ६० ॥ तद्विस्मरणमेवात्रतेसमाधानकारणं ॥ नत्वंनाहंनैवलोकास्त्वमेकोसिमिरंजनः ॥ ६१ ॥ योनादस्तन्मनोविद्धिऋगाद्यंगमिति श्रुतेः ॥ स्थूलंवर्णात्मकंनादरूपंसूक्ष्मंभवेन्मनः ॥ ६२ ॥ नादस्यलयएवातोमनोलयइतिस्मर ॥ सुस्नातानादगंगेयंवर्णैःपर्वणि पर्वणि ॥ ६३ ॥ स्वगेहंप्रापयत्येवतद्विष्णोःपरमंपदं ॥ श्रावंश्रावंमधुरमधुरंश्रीगुरोत्वद्वचांसिपायंपायंपरममममृतंपूर्णपूर्णमनोनः ॥ गाढंगाढंतवपदयुगंश्लेषयंतोवसामःस्मारंस्मारंतवहिचरितंशेषमायुःक्षिपामः ॥ ६४ ॥ कायेनवाचामनसेंद्रियैर्वाबुध्यात्म

क. नावानुसृतःस्वभावात् ॥ करोमियद्यत्सकलंपरस्मैश्रीदेशिकेंद्राय गा.
११ समर्पयेतत् ॥ ६५ ॥ गुरोकैवल्यगाथेयंनश्रुताक्वापिजन्मनि ॥
अतोजन्मसमापन्नास्तदद्यसफलीकृतं ॥६६॥ इतिश्रीकैवल्यधा
मनिवासिकृष्णानंदसरस्वती कृतकैवल्यगाथायांस्वरूपस्थितिदृ
ढीकरणंनामतृतीयोध्यायः ॥ ३ ॥ ॥ ॐ ॥ ॥

नादाद्वर्णास्ततोधातुस्ततः प्रत्ययसंभवः ॥ ततस्तुपुरुषाजाताः
प्रथमोत्तममध्यमाः॥१॥ततोसौव्यवहारोभूत्कर्तृभोक्तृविदन्वितः॥
वर्णेभ्योनातिरिच्यंतेधातवः प्रत्ययाअपि ॥२॥ पुरुषाअपितेवर्णा
नादोनादश्चिदात्मकः ॥ चिदात्मात्वंनित्यशुद्धबुद्धःकेवलसंस्थि
तिः ॥ ३ ॥ कार्याणांनाशभीरूणामाधारोभैरवोस्म्यहं ॥ आदि ११

तीयचिदानंदस्वरूपोत:शिवोस्म्यहं ॥ ४ ॥ कुपूरुष:किंपुरुषोम
हापुरुषइत्यपि ॥ अस्त्यन्योवेदपुरुषोविराट्पुरुषइत्यपि ॥ ५ ॥
अतोन्य:कालपुरुष:प्रथमाद्याश्चपूरुषा: ॥ सर्वेतपुरुषावत्सपुरुषो
त्तमरूपिण: ॥ ६ ॥ अतोस्मिलोकेवेदेचप्राथित:पुरुषोत्तम: ॥
इत्याहभगवात्त्साक्षादर्जुनायकृपाकर: ॥ ७ ॥ शृण्ववस्थात्रयंव
र्णत्रयेणकवलीकृतं ॥ उत्तम:पुरुषस्त्वंतुक्षराक्षरविभागकृत् ॥८॥
परमात्मासिसर्वात्मायतोहमितिभाषसे ॥ अबाधितत्वात्परम:स
र्वात्मासर्वशब्दभुक् ॥ ९ ॥ आदिहांतोवर्णसंघोयतोहमितिभ
ण्यते ॥ तत:सर्वाणिनामानितत्तस्वरसतोऽभिधा ॥ १० ॥
पित्रोपस्थितसर्वेषुनामस्वेकंहिगृह्यते ॥ यथाभक्तोहरेर्नामगृह्णा

त्येकमभीप्सितं ॥ ११ ॥ तत्राभिमानीतेनैवबुध्यसेश्रीहरि
र्यथा ॥ अतः सर्वात्मपरमात्मत्वैश्वर्यंसुखंभज ॥ १२ ॥ कृत
कृत्योसिमुक्तोसिबुद्धोसिस्वस्थतांभज ॥ यथाहृदिस्थयादेऽयावा
ङ्मय्याप्रेरितोस्म्यहं ॥ १३ ॥ तथैवप्रोक्तवांस्तेनसैवांबापरितुष्यतु ॥
शिक्षयित्वायथाबालंभाषयित्वापरांमुदं ॥ उपैतिजननीतद्वदत्रां
बापिहितुष्यति ॥ १४ ॥ यत्पश्यासियदादत्सेयच्छृणोषिवदस्यापि ॥
सर्वंतद्वाङ्मयंज्योतिरहमेवेतिभावय ॥ १५ ॥ अहंगर्भेबिभर्म्येत
न्मात्रात्रयकलेवरा ॥ सृजामिविविधान्वर्णान्वाक्यानिविविधा
निच ॥ १६ ॥ तैस्तैर्मुहुर्हासयामिरोदयामिपदेपदे ॥ मोदयामि
चमत्कारैःक्रीडयामिनिजंपतिं ॥ १७ ॥ क्रीडायांतनुजोजज्ञेषण्मु

स्वस्तुषाडिंद्रियः ॥ तदुपासनयाजंतुर्ब्रह्मचर्यंसमश्नुते ॥ १८ ॥
द्वितीयोगणपः पुत्रोवर्णत्रयकलेवरः ॥ अष्टमूर्तिर्वागधीशस्तत्प्र
सादाद्यशोऽश्नुते ॥ १९॥ लक्ष्मींपुत्रंकलत्रंचसर्वत्ररसिकोभवेत् ॥
ताभ्यामिमाभ्यांपुत्राभ्यांक्रीडयामिनिजंपतिं ॥ २० ॥ यत्राहं
सोपितत्रैवयत्रसोस्त्यास्मितत्रच ॥ सदर्शयातिमांतंचदर्शयाम्य
हमादरात् ॥ २१॥ बीजंतस्यास्तिमेगर्भेततोजायेतितांत्रिकाः॥
ब्रह्मविष्ण्वंद्ररुद्रादीन्सृजेहंपालयेपिच ॥ २२ ॥ संहरामिचका
लेननत्रस्यामिकदाचन ॥ यदात्रस्यातिमेभर्तातदात्यजतिकिंचन
॥ २३ ॥ किंचिद्गृह्णातिविकलः क्रीडावासनयान्वितः ॥ कांचि
च्छरणंयातिकांचिन्मंत्रंजपत्यसौ ॥ २४ ॥ यदाहंगुरुरूपेणता

रंयच्छामिमद्वपुः ॥ तदुपास्तेयावदेवतावद्ब्रह्मपदंव्रजेत् ॥ २५॥
तद्विचारयितुंयावत्प्रवृत्तस्तावदेवाहि ॥ तिसृर्मात्रास्त्यजाम्येवत्या
जयामिवपुस्त्रयं ॥ २६ ॥ तदावयोः संगमेनसामरस्यंप्रवर्तते ॥
तमानंदमहंवक्तुमशक्तासोपिनप्रभुः ॥ २७ ॥ तस्यानंदस्यनां
तोस्तिदेशतः कालतोपिवा ॥ममनामतदामोक्षलक्ष्मीस्तस्याशि
वःपरं ॥ २८॥ ताराहंतारयेयस्मात्तारदानेनमामकान् ॥ काल्य
हंद्वैतसंहाराल्ललितासामरस्यतः ॥२९॥ पराहंशब्दविस्तारपरा
काष्ठास्म्यिवैयतः ॥ विचारस्यपराकाष्टामय्येवातःपरांबिका ३०॥
वाचारंभणवाक्यंचेद्विचारयासिवत्स्यसि ॥ इमांगाथांप्रातिपदंयो
विचारयतेनरः ॥ ३१ ॥ लभतेमोक्षपदवीमत्रमानमहंश्रुतिः ॥ १३

एतदांभृणिसूक्तेनऋग्वेदेगदितंमया ॥ ३२ ॥ आश्चर्यवत्पश्यति
कश्चिदेनमाश्चर्यवद्वदतितथैवचान्यः ॥ आश्चर्यवच्चैनमन्यःशृणोति
श्रुत्वाप्येनंवेदममप्रसादात् ॥ ३३ ॥ मत्प्रसादोयमेवायंजगन्मि
थ्यात्वबोधनं ॥ मत्प्रसादात्परांशांतिमचिरेणाधिगच्छति ॥
॥३४॥ पश्यकृष्णोभवद्बाल्येगोपस्तस्मात्प्रभावतः ॥ रेमेरासेगो
पिकाभिर्नानावर्णाभिरच्युतः ॥ ३५ ॥ अंगनामंगनामंतरेसो
भवत्ताश्चवाचोममानेकवर्णागमाः ॥ नादलुब्धाघनेसन्निशी
थेहरिर्द्वैतबाधादतश्चिद्विधौकाशिते ॥ ३६ ॥ नानावर्णाकृ
र्षणननोद्वैतानिषेधनात् ॥ वागाभिन्नाततः प्रोक्तः कृष्णानंदस
रस्वती ॥ ३७ ॥ इंद्रियाणांहिविषयायथैवामिषतांगताः ॥

तथात्स्मामिषतांयातुवचसोमनसस्तव ॥ ३८ ॥ यदाशब्दस्त
दाविश्वमात्मन्येवावभासते ॥ यदानशब्दोनतदाभासतेत्वंहि
शिष्यसे ॥ ३९ ॥ तस्माद्दर्पणदृश्यमाननगरीतुल्यंजगद्भासते
स्वादर्शेसकलातिगेसकलगेसर्वप्रियेशाश्वते ॥ सच्चिच्छब्दविम
र्शनेनमलिनेनंतीतिसंमार्जितेचिंताप्रावरणं विहायसहसानंदांबु
धौमज्जभोः ॥ ४० ॥ उपास्महेवयंतत्तुज्योतिर्वाग्ज्योतिरिंधनं ॥
निरिंधनंधनंतेषांयेषांवाग्देवतासिषः ॥ ४१ ॥ तत्स्तुवीमोवयं
ज्योतिर्वाङ्मयंकेनवाकथं ॥ मयाप्रकाश्यतेतत्तुयेनाहंचप्रकाशि
तः ॥ ४२ ॥ तांवाचममृतासारवर्षिणींमृतिहारिणीं ॥ तारिणीं
सच्चिदानंदरूपिणींसततंश्रये ॥ ४३ ॥ गुरुर्वागेवनान्योस्तिदेवः

स्वात्मैवनापरः ॥ अतःश्रीसच्चिदानंदसरस्वत्याःपरोनमे ॥ ४४ ॥
इतिश्रीकैवल्यधामनिवासिकृष्णानंदसरस्वतीकृत कैवल्यगाथायां
श्रीगुरुरूपवाग्देवतोक्तिर्नामचतुर्थोध्यायः ॥ ४ ॥ ॐ ॥
अन्यच्चशृणुहेवत्सरहस्यंसंशयापहं ॥ शब्दात्सृष्टिःकथमभूदिति
मासंशयंवह ॥ १ ॥ मंत्राच्छब्दमयादिंद्रजालंसृजतिमानवः ॥
स्तंभनादीनिकर्माणिजायंतेशब्दतःखलु ॥२॥ रागद्वेषादयोदोषाः
शब्दादेवहिलौकिकाः ॥ स्वर्गादयोमंत्रसाध्याराजादेःसुप्रसन्नता
॥ ३ ॥ धनलाभादयस्तेषांरक्षणादीनिशब्दतः ॥ तस्मात्सृष्टिः
शब्दमयीचिन्मयीतत्रभासनात् ॥ ४ ॥ यथापरिणमेच्छब्दस्त
थाविश्वस्यभासनं ॥ शब्दोज्योतिर्मयस्तस्मात्तमोपिचविभास

ते ॥ ५ ॥ अंधकारेपिशब्देनभासतेसकलंजगत् ॥ देहप्राणमनो
बुद्धिसुखाख्यंकोशपंचकं ॥ ६ ॥ अवस्थास्तत्रभोगाश्वशब्दमा
त्रान्नचेतरत् ॥ शब्दमेवतमोविद्धिसूर्यादिज्योतिषांगणं ॥ ७ ॥
उच्चारितोपिशब्दस्तुपरिणामंनयातिचेत् ॥ नतदास्त्यर्थविज्ञानं
परिणामेतुतद्भवेत् ॥ ८ ॥अतःसर्वपदार्थेषुलभ्यतेशब्दएवहि ॥
अतोग्निबीजंजपतामुष्मादेहेषुदृश्यते ॥ ९ ॥ चंद्रबीजंप्रजपतां
शीतलत्वंप्रदृश्यते ॥ शांतिबीजंप्रजपतांशांतिस्तेषांगृहेस्थिता
॥ १० ॥ तस्माच्छब्दमयींसृष्टिंविश्वस्यत्वंसुखीभव ॥ शब्दएव
घनीभूयविषयेंद्रियसंज्ञकः ॥ ११ ॥ इंद्रियाणामिंद्रियंत्वमिंद्रि
यंविषयंतथा॥जानीषेचित्प्रदीपत्वाच्छब्दास्तेरश्मयःस्मृताः १२॥

वर्णान्पश्यसितत्रैवसंकीर्णांस्तेनतेभ्रमः ॥ वर्णसंकरयोगेनविश्व
जालंततंदृढं ॥ १३ ॥ तान्वर्णान्नादसंरूढान्विद्धिनादात्मका
न्स्वतः ॥ यथासंकेतमेवैतेवेदयंत्यर्थजालकं ॥ १४ ॥ असं
भवेसन्निहितं गंगाशब्दोयथातटं ॥ गंगात्वरहितंतद्वद्दृश्यंदृश्य
बाधने ॥ १५ ॥ जातौसंबाधितायांतुजात्यतीतंप्रचक्षते ॥ गुणे
संबाधितेतत्वमगुणंबोधयंतिते ॥ १६ ॥ क्रियायांबाधितायांतुवे
दयंतिक्रियातिगं ॥ विचाराच्छब्दमात्रत्वेसर्वेर्थाबाधिताःस्वतः ॥
॥ १७ ॥ तदतीतंचकिंचित्तुवेदनीयंयथातटं ॥ नादशक्त्योप
स्थितंतद्वागतीतंपरंपदं ॥ १८ ॥ बोधयित्वाशमंयांतिसर्वेवर्णान
चान्यथा ॥ अज्ञाततत्वाद्वाग्भूतिस्तत्वबोधायचेष्यते ॥ १९ ॥

यथाकिमिदमित्येवमुत्थितावाङ्नशाम्यति ॥ इदमित्येवनिर्णी
यबोधेशाम्यतिकेवलं ॥ २० ॥ वाग्जोतिर्बोधसंभूतमज्ञानतिमि
रापहं ॥ पदशक्त्यालक्षणयानादशक्त्याथवार्थकं ॥ २१ ॥
यथायोगंबोधयित्वाव्युत्पन्नंप्रतिशाम्यति ॥ यथासूर्यादिज्योतीं
षिकांक्षंतेचक्षुषोबलं ॥ २२ ॥ व्युत्पत्तिमपिवाग्जोतिस्तथै
वाकांक्षतेबलं ॥ अव्युत्पन्नेषुचाज्ञानंबोधयित्वैवशाम्यति ॥२३॥
नजानेकिंवदत्येषइतिलोकस्यचानुभूः ॥ अथवाबोधयत्येषवक्तु
र्वानिर्विचारणं ॥ अविवेकोविवेकोवानिमित्तंनतुजन्मभूः ॥२४॥
जन्मभूर्वागतीतंतत्परमंज्योतिरेवहि ॥ घटस्याहिघटातीतामृदि
वेहेष्यतेबुधैः ॥ २५॥ तस्यतस्यलयस्तत्रयस्माद्यस्यसमुद्भवः ॥ १६

अतोलयस्तुतारस्यब्रह्मण्येवोपपद्यते ॥ २६ ॥ नाकाशेनापिश
बलेमात्राभिश्चनिषेधनात् ॥ तदतीतेपरेशुद्धेबुबोधयिषयागतः ॥
॥ २७ ॥ तदतीतस्तुतत्रैवजानन्नेवाहितत्रयं ॥ स्थितस्तंबोधयि
त्वातुतत्रैवलयमेतिसः ॥ २८ ॥ तदेवहिपरंज्योतिः सएवपरमः
शिवः ॥ सैवशक्तिःपरातारासमहाकालउच्यते ॥ २९ ॥ नारा
यणः सएवेतिसैवश्रीर्जगदंबिका ॥ सएवबिंदुःसर्वात्माततोनादो
व्यजायत ॥ ३० ॥ तारात्माततएवेमेवर्णाअकथसंज्ञकाः ॥ प्र
त्याहारेणाथइतिप्रोच्यतेलोकवेदयोः ॥ ३१ ॥ एतदादित्रिकोणं
स्याद्धळक्षमणिमंडितं ॥ हकारोयुज्यतेज्भिस्तुयोविसर्गस्वरूपकः
॥ ३२ ॥ ळकारोयुज्यतेहल्भिर्दुस्पृष्टत्वंप्रबोधयन् ॥ क्षकारोभेद

मेवाहाशिवशक्त्योरचांह्लां ॥ ३३ ॥ अतस्तदुल्लंघनंतुनेष्टंवर्णवि
चरिणां ॥ मध्येसोहंमनुंकेचिच्छिवशक्त्यात्मकंविदुः ॥ ३४ ॥
कंचिन्नादावसानस्याभेदबोधकमूचिरे ॥ द्रष्टासौवर्णसंघेनवेष्टितः
परमेश्वरः ॥ ३५ ॥ सयथावर्णविन्यासंकुर्यात्पदगतिस्तथा ॥
आदिळांतोवर्णसंघोवेदराशिः स्मृतोबुधैः ॥ ३६ ॥ तद्रसः सोह
मित्येवसर्ववेदार्थनिर्णयः ॥ तस्यज्ञानाधिकारार्थधर्ममार्गः प्रवर्ति
तः ॥ ३७ ॥ कर्मचोपासनाचेतिद्विविधोधर्मइष्यते ॥ सधर्मो
योगइत्याहुरन्यव्यावृत्तिलक्षणात् ॥ ३८ ॥ एषैवचापरावि
द्यापरावस्तुपरीक्षणं ॥ मन्वाद्याअपराचार्याः पराचार्याःशिवाद
यः ॥ ३९ ॥ अपरायांशिक्षितस्यपरायामधिकारिता ॥ तत्रत्रयं

परीक्ष्यंस्यात्सकःकोहमिदंचकिं ॥ अथत्वाद्वयमेवस्यादस्तिकिंना
स्तिकिंभवेत् ॥ उभयत्रापिदृश्यस्यशब्दमात्रस्वरूपिणः ॥ ४० ॥
मिथ्यात्वंनहितद्द्रष्टुर्भानेशब्दानपेक्षणात् ॥ यथासर्पःशब्दका
मस्तथारज्जुरपीतिचेत् ॥ ४१ ॥ मिथ्यात्वंतुल्यमेवेहनात्माश
ब्दानपेक्षणात् ॥ अहमस्म्येवसद्रूपोदृश्यादृश्यातिगःपरः ॥
दृश्यादृश्येशब्दकामेनसतीइतिसापरा ॥ ४२ ॥ शिवाद्याःसन
काद्याश्चदत्ताद्याश्चमहर्षयः ॥ अन्येचसिद्धगुरवोविक्रीणंतिनि
जापणे ॥ ४३ ॥ परीक्षयंत्यागतंचपृच्छंतिक्वकुतोसिकः ॥
प्रतिवक्त्यनुभूतंचदेशंहेतुंनिजान्वयं ॥ ४४ ॥ स्वंचनाम्नासहै
वैतच्छ्संतिकथयंतिच ॥ किंत्वंबाल्येप्येवमेवावादीःकिंत्वंनशिक्षि

तः ॥ ४५ ॥ पितृभ्यांगुरुणावापिनकिंचित्प्रतिबोधितः ॥ बोधि
तोहंब्राह्मणोसिकर्तास्यस्यसुतोपिच ॥ ४६ ॥ तद्विश्वस्यब्रवीस्ये
वंब्रूतयूयंस्ववृत्तकं ॥ अस्मद्देशेकोपिनास्तिनास्माकंजातिरिष्य
ते ॥ ४७ ॥ नमातानपितावंधुर्नकालोनापिसंक्रिया ॥ सर्वभक्षा
धर्महीनामौनिनोपिचवाग्मिनः ॥ ४८ ॥ किंभ्रष्टाः सत्यमुक्तंते
भ्रंशयामोपिकर्मणः ॥ अत्रापणेतुबहवोभ्रष्टादत्तशुकादयः॥४९॥
भ्रंशयंत्यवतेलोकान्पंडितान्वाक्यकोविदान् ॥ यशःश्रुत्वैवागतेन
ज्ञातंवोरूपमक्षतं ॥ ५० ॥ स्वरूपंत्वंनजानीषेऽस्माकंव-तुंकथंक्ष
मः ॥ स्वरूपंनकुतोजानेयुष्मदग्रेस्थितोनकिं ॥ ५१ ॥ अस्माक
मग्रस्तंभोपिसकिंभवितुमर्हसि ॥ समेदृष्टिपथारूढोनाहंचेत्तेव

पुस्तथा ॥ ५२ ॥ आस्तामत्रापणेकस्मादागतस्त्वंवदाशुनः ॥ को
हमस्मीतीक्षयितुंनास्तिकिंचास्तिकिंसकः ॥ ५३ ॥ इतिचेद्वदहे
वत्सस्सावधानेनचेतसा ॥ कस्मादयंसंशयस्तेदेहादौममतामम ॥
॥ ५४ ॥ अहंतापिचतत्रैकांनिर्धार्यवददेशिक ॥ अहंचेन्मृतएवा
स्मिममचेत्प्रायशोमृतः ॥ ५५ ॥ त्वदन्यः संशयस्यास्यछेत्ता न
त्युपपद्यते ॥ दृश्यंनानुसरत्येवानुसराम्येवतत्सदा ॥ ५६ ॥
आत्रामत्रगतिः कास्यांनियंत्तास्यककीदृशः ॥ धन्योसिवत्ससुम
तेकिंत्वयाचरितंपुरा ॥ ५७ ॥ येनत्वयाकृतः प्रश्नोनभूतोनभवि
ष्यति ॥ नजानेकिंकृतंपुण्यंयेनत्वादृशसंगतिः ॥ ५८ ॥ अंबा
याःकरुणामूर्त्तेःकृपेत्येवमतिर्मम ॥ ममदेहइतिब्रूषेत्वंवाब्रूतेवपुस्त

व ॥ ५९ ॥ अहंवच्मिनमेदेहोवक्तिवेद्मिनवेत्तिसः ॥ तर्हियोवे
त्तिसब्रूतेयोनवेत्तिनवक्तिसः ॥ ६० ॥ तर्हिनत्वंदेहइतिसिद्धंत्वद्व
चनादिह ॥ घटाद्देहेकोविशेषोनाविशेषमतिर्मम ॥ ६१ ॥ भोग
मात्रेविशेषश्चेद्युक्तंतत्सर्ववस्तुषु ॥ केनदृष्टासर्वतस्तुसुखदुःखस
मानता ॥ ६२ ॥ तस्मादहंताविश्रांतात्वय्येवनहिदेहके ॥ सामा
नाधिकरण्यस्यदेहोहामितिकागतिः ॥६३॥ शीतलोवन्हिरित्यस्य
यागतिःसागतिर्भवेत् ॥ अपरीक्षिततत्त्वेषुचरितार्थंयथातथा ॥६४॥
किंतत्रममतायुक्तायुक्तासर्वेषुवस्तुषु ॥ सर्वंकथंमेदेहोपिकथंतेवद
बालक ॥६५॥ कोदेहनामानामैवतर्ह्यसौदृश्यतेकथं ॥ नदृष्टव्यो
हमित्येवंशब्दस्यशपथःकिमु ॥६६॥ श्रोत्रस्यविषयःशब्दश्चक्षु

षोविषयःकथं ॥ श्रोत्रस्यविषयःशब्दोवचसोविषयःकथं ॥ ६७ ॥
श्रूयतेदेहशब्दस्तुनदेहइतिचेद्वद ॥ योनश्रुतःक्वापिलोकेसकथंदृश्य
तेत्वया ॥ ६८ ॥ दृष्टंस्यान्नरश्रृंगंतेनश्रुतंक्वापिकेनचित् ॥ किंदे
हशब्दश्रवणाद्देहोपिश्रुतइष्यते ॥ ६९ ॥ वत्सदर्शयमेशीघ्रंको
देहःशब्दमंतरा ॥ यःस्पृश्यतेपीयतेवाघ्रियतेध्रियतेथवा ॥७०॥ श्रू
यतेपिससर्वोपिशब्दएवनचेतरः ॥ अलंकारोयथापंचविषयःस्वर्ण
मेवहि ॥७१॥ननुहेमापिपंचानांविषयस्तादृगेवसः॥ इतिचेद्धेमके
नेवदृष्टंकिंलक्षणंवद॥७२॥यद्यद्वदसितत्सर्वमलंकारेतिगच्छति ॥
सर्वेंद्रियागोचरस्तद्धेमसर्वेषुगोचरः॥७३॥एवंप्रब्रुवताशब्दकुतोनां
गीकृतस्तथा ॥ यःप्रसिद्धःक्वचित्स्थानेनप्रसिद्धंसुवर्णकं ॥ ७४ ॥

कारणंकार्यरूपेणमूर्छितंमूर्त्तिरुच्यते ॥ तदागोचरतांयातिविश्वद्वायु
क्रमाद्यथा ॥ ७५ ॥ सुवर्णंतर्कविषयःस्पृश्यतेदृश्यतेतथा ॥ विली
यतेघट्यतेचक्रमान्मूर्च्छाचितंभवेत् ॥ ७६ ॥ मूर्छाचितंकारणंतु
कार्यमित्यभिधीयते ॥ नकारणातिरेकित्वंतद्विनानुपलब्धितः ॥
॥ ७७ ॥ यद्वन्मूर्छाचितंवारिपाषाणश्चाभिधीयते ॥ तद्वन्मूर्छाचि
तःशब्दोजगदित्यभिधीयते ॥ ७८ ॥ क्वचित्कदाचित्कैश्चिच्चनिमि
त्तैर्मूर्छिताचवाक् ॥ क्वचित्कदाचित्कैश्चिच्चनिमित्तैर्दृश्यतेजगत्
॥ ७९ ॥ विश्वंपश्यन्नविश्वंस्याद्घटंपश्यन्घटोयथा ॥ देहंपश्य
न्नदेहःस्यात्तस्मात्त्वमहमःपदं ॥ ८० ॥ कस्त्वंयोहमहंकस्त्वमि
तिचेदेकताऽनयोः ॥ सिद्धेतिचेदिष्टमेवकथंनानास्थलास्थितिः ॥

यथावियद्वायुकालादिशांनानास्थलस्थितिः ॥ ८१ ॥ सुख
दुःखोपलंभास्तुनानैवोपाधिभेदतः ॥ युगपत्सुखदुःखादिसंबद्धः
कालइष्यते ॥ ८२ ॥ एकोवसंतःसर्वत्रनैकंफलमुपाश्नुते ॥ क्वचि
दुष्णःक्वचिच्छीतःक्वचिच्चसमतांभजेत् ॥ ८३ ॥ क्वचित्सुखीक्वचि
दुःखीत्वमस्येकःसमःक्वचित् ॥ सुखदुःखेनतेसत्येसमस्तदुभया
तिगः ॥ ८४ ॥ एवंप्राणादयःकोशाविवेच्यास्तुमनीषिभिः ॥चल
त्वादपिदृश्यत्वान्नपदान्यहमःखलु ॥ ८५ ॥ तत्कोहंयःपृच्छसि
स्वंकःस्वोयंत्यक्तुमक्षमः ॥ गृहीतुमपिसोसित्वंविदिताविदिता
त्परः ॥ ८६ ॥ नत्यजामिनगृह्णामिस्वप्रकाशेस्थितोपिच ॥ दृश्य
द्वैतंतुपश्यामिममतायुज्यतेपिच ॥ ८७ ॥ दृश्यतांतेनकाहानि

भ्रमतातेकथंवद ॥ भोगदत्वाद्युज्यतेचेदिंद्रजालेपियुज्यते ॥८८॥
मिथ्येंद्रजालमितिचेत्सत्यतास्यकुतोवद ॥ दृश्यत्वंतुल्यमेवेह
स्थिरतापिनकाचन ॥ ८९ ॥ नकालनियमस्तत्रकर्त्तुंयुज्येतकै
श्चन ॥ प्रमाणगोचरत्वंचतुल्यंऽव्यवहृतिःसमा ॥ ९० ॥ अन्या
यत्तेनान्यपुंसाव्यवहर्तुंनशक्यते ॥ शक्यतेक्वापिदृष्ट्यादौक्रिया
यांनैवशक्यंत ॥९१॥ अन्यायत्तघटेनेवत्विंद्रजालघटेनच ॥ एते
अस्मृग्रमंत्रेणसृष्टिंत्वंदृदृष्टिगोचरां ॥ ९२ ॥ श्रुतिराहेंद्रजालस्यमं
त्राअपिचभूरिशः ॥ ९३ ॥ विश्वामित्रजसृष्टिंतुगायत्रीप्रभवांज
गुः ॥ यथाशक्तिसृजस्येवशब्दात्सृष्टिंप्रतिक्षणे ॥९३॥ अहंसृजा
मिचेत्सृष्टिंप्रातिकूलमिदंकुतः ॥ उपायप्रातिकूल्येनप्रातिकूल्यमुपेय

के ॥ ९४ ॥ तस्मादुपायविज्ञानंगुरुभ्योलभ्यमेवते ॥ यतंतआनु
कूल्येषुनोपायेषुजनाइमे ॥ ९५ ॥ उपायानामानुकूल्यंगुरुकारुण्य
मूलकं ॥ तत्संपाद्यंयत्नशतैर्दुःखिनस्तत्प्रमादिनः ॥ ९६ ॥ कउपा
योस्तिविश्वस्यानुकूल्येवददेशिक ॥ तदुपायंवच्मिवत्सश्रृणुष्वा
वहितोभव ॥ ९७ ॥ शब्दब्रह्ममयंविश्वंपरब्रह्ममयंतथा ॥ प्रतिबिं
बमिवादर्शेपश्यंस्तिष्ठसुखीभव ॥ ९८ ॥ असंगःपरमोपायःसत्सं
गसहकारितः ॥ अखंडसुखलाभाययेनस्यात्कृतकृत्यता ॥ दुःसं
गःपरमोपायोदुर्बोधसहकारितः ॥ अखंडदुःखलाभायकर्तृत्वायप
देपदे ॥ ९९ ॥ नमःसंगायमहतांमानभंगाययोगिनां ॥ भूमिका
रोहविघ्नैककर्मठायदुरात्मने ॥ १०० ॥ सत्यमुक्तंत्वयानाथसम्य

गेवप्रबोधितः ॥ तथापिविश्वसंहारंकामयेनाथपूरय १०१ शृणुवत्स
रहस्यम्मेमंत्रोद्भूतमिदंजगत्॥ ततोमंत्रविभेदंत्वंकुरुयत्नेनशुद्धधीः
॥२॥केतेमंत्राविभेदःकःकथंभवतितद्वद॥ वाक्यमंत्रमयींमायांजग
ज्जालप्रदर्शिनीं ॥३॥ वर्णशस्त्रैर्भेदयित्वानादकोशेनिधापय ॥ भिन
द्मितांकथंवर्णैर्वर्णान्वानादकोशके॥४॥स्थापयामिकथंचैतद्वदमेक
रुणानिधे॥वाक्यानिवर्णरूपाणिवर्णानादस्वरूपकाः॥५॥सचनाद
स्ताररूपोवयवानभिसंधिकृत् ॥ स्वजागृतिंबोधयतिविषयग्रहण
क्षमां ॥ ६ ॥ नतदासीत्किंचनापिततःकैवल्यबोधकः ॥ ततोवर्णस
मुद्भूतिस्तदाअउमइत्यपि ॥ ७ ॥ संकेतितस्ततोधातुसंभवेचा
वतीत्यपि ॥ ब्रह्मचोपासकंविश्वंरक्षत्येषविचारितः ॥ ८ ॥

बूह्मस्वाभेदतोरक्षेदवस्थात्रयवाधनात् ॥ अद्वितीयत्वबोधेनबूह्म
त्वंस्थापयन्नसौ ॥ ९ ॥ जीवंरक्षतिविश्वंचस्वोदरेस्थापनेनच ॥
भूयःकथयतारस्यरहस्यंपरमामृतं१ १० ॥दुर्बोधंमंदमनसांसुगूढंकरु
णाकर ॥ नादसामान्यरूपोयंतारोवाग्जोतिरिष्यते ॥ ११ ॥ चि
त्सामान्यैंधनंतत्तुबोधयेदिंधनाकृतिं ॥ यथैवविशिखोवन्हिर्भासये
दिंधनाकृतिं ॥ १२ ॥ विवक्षिताक्षरात्मायंप्रतिवर्णाकृतिंब्रुवन् ॥
अवस्थांजागृदादिंचशब्दमात्रत्वबोधनात् ॥ १३ ॥ मिथ्या
त्वमाहावस्थानांशब्दमात्रेक्वसत्यता ॥ मिथ्यात्वंनत्ववाक्यार्थः
किंत्वार्थिकमितिस्मर ॥ १४ ॥ अवस्थात्रयमिथ्यात्वेकेवलीभा
वआर्थिकः ॥ ब्रह्मत्वमपितद्वत्स्यादद्वयत्वंतथार्थिकं ॥ १५ ॥ अव

स्थात्रयबाधेपिब्रह्मत्वंकथमस्यतु ॥ किंतद्ब्रह्मत्वमेवात्थयदभेदा
द्विभेषिभोः ॥ १६ ॥ सत्यज्ञानानंतरूपंब्रह्मेतिश्रुतिराहचेत् ॥
अस्त्वेतल्लक्षणंवत्सत्वामाक्रमतिवानवा ॥ १७ ॥ त्रिकाला
बाधितत्त्वेनप्रमातृत्वादिबाधनात् ॥ सत्यज्ञानस्वरूपोहमानंत्यं
नानुभूयते ॥ १८ ॥ यद्वस्तुयत्रभासेततत्तत्रास्तीतिनिश्चयः ॥
देहांतर्भामिनोबाह्येतदानंत्यंनयुज्यते ॥ १९ ॥ सम्यगुक्तंत्व
यावत्सदेहोयंभातिकुत्रवा ॥ पृथिव्यांभासतेसाक्वब्रह्मांडेतत्क्व
तन्मयि ॥२०॥ यस्मिन्ब्रह्मांडभानंस्यात्तदनंतंकुतोनाहि ॥ यदिते
लक्षणाक्रांतिर्ब्रह्मतानेष्यतेकुतः ॥ २१ ॥ सर्वज्ञत्वंनेतिचेत्तकेवले
पिविकल्पितं ॥ ज्ञत्वमात्रंवास्तविकंतत्वंचेत्तेकुतोभयं ॥ २२ ॥

तस्मादहंब्रह्मशुद्धमितिगर्जयगर्जय ॥ अतात्विकस्यविश्वस्यानियं
ताकुत्रमृग्यते ॥ २३ ॥ कोनियंतावदसखेदृष्टस्यमृगवारिणः ॥
मृगाणांभ्रमएवास्यनियंतेतिमतिर्मम ॥ २४ ॥ तर्हित्वदृश्यविश्व
स्यानियंतात्वद्भ्रमोभवेत् ॥ अधुनादृश्यतेविश्वंनवाभाषस्वतत्व
तः ॥ २५ ॥ नचेन्नियंतृजिज्ञासाशांतैवतवबुद्धिमन् ॥ दृश्यतेचे
द्ब्रूहिशीघ्रंभवान्जागर्तिवानवा ॥ २६ ॥ जागर्मिकिंतुस्वपिमिसु
ष्वापिम्यपिकालतः ॥ जागर्त्याद्यास्तेस्वभावानवाब्रूहिविचार
यन् ॥ २७ ॥ एतेकथंस्वभावाःस्युरागमापायशालिनः ॥ कस्तेस्व
भावःपरमएतत्त्रितयसाक्षिता ॥ २८ ॥ कदापश्यस्यवस्थांत्वंकिं
कृत्वाकुत्रपश्यसि ॥ यदाबहिर्मुखोभूत्वेंद्रियाभिमुखतांभजे ॥

॥ २९ ॥ जागृतिंतत्रपश्यामिकिंचिदंतर्मुखोयदा ॥ तदास्वप्नंहि
पश्यामियदात्रस्तोबाहिर्मुखे ॥ ३० ॥ तदाविहायतांदृष्टिंस्वस्थ
तांयामिकालतः ॥ तदासुषुप्तआनंदपारावारेब्रुडाम्यहं ॥ ३१ ॥
तदानकिंचित्पश्यामिकंचिन्नाभिमिनोमिच ॥ अनुभूतप्रायमेवजा
ड्यंतत्रस्मराम्यहं ॥ ३२ ॥ किमंतर्मुखतासत्याकिंबहिर्मुख
तातव ॥ एतेनमेस्वभावोस्तोयत्स्वभावोसिसुव्रत ॥ ३३ ॥ तत्स्व
भावस्थिरस्तिष्टपश्यन्नविश्वंहिकुत्रवा ॥ इमांविद्यांगुप्ततरांमाप्र
काशयकुत्राचित् ॥ ३४ ॥ तारंचिंतामणिंदद्मस्तंपरीक्षयस
र्वदा ॥ सर्वेरिष्टाःशमंयांतिचिरंत्वंसुखमेधसे ॥ ३५ ॥ श्रीगुरो
करुणासिंधोनदातात्वत्समोभुवि ॥ येनचिंतामणिश्चायंसर्वारि

ष्टनिवारणः ॥ ३६ ॥ सर्वसंपत्प्रदाताचदत्तोमेसहसैवयः ॥
एतन्मूलंकिन्नुदास्येदास्येस्तुममदेहकः ॥ ३७ ॥ नमोनमस्तेस्तु
सहस्त्रकृत्वःपुनश्चभूयोऽपिनमोनमस्ते ॥ नमःपुरस्तादथपृष्ठतस्ते
नमोस्तुतेसर्वतएवसर्व ॥ ३८ ॥ अनंतवीर्यामितविक्रमस्त्वंयतो
विभिन्नोममर्मोहपर्वतः ॥ सखेतिमत्वाप्रसभंयदुक्तंतत्क्षामयेत्वा
महमप्रमेयं ॥ १३९ ॥ किंवादास्यामितृप्तायलोकतृप्तिकरायच ॥
दास्येदास्यामिदेहंमेपादयोरर्पयामिते ॥ १४० ॥ उत्तिष्ठोत्तिष्ठभ
द्रंतेसकृद्गर्जयासिंहवत् ॥ अहंब्रह्मास्म्यद्वितीयंशिवोहममृतोऽभ
यः ॥ १४१ ॥ इतिसंगर्जगन्नत्रसुखंतिष्ठापणेनिजे ॥ देहंदास्या
मिदास्यायेत्युक्तंतद्धटतेकथं ॥ १४२ ॥ अस्मद्दास्यंकष्टतरंस्वतं

 त्राःकस्यवात्वशे ॥ उद्बुध्यस्वपशोत्वंहिनपशुस्त्वंशिवोह्यसि 
॥ १४३ ॥ शिवोत्कृत्तमिदंपिंडमतस्त्वंशिवतांव्रज ॥ इतिकृंतंतिगु
 रवोदत्वाब्रह्मत्वमाशुते ॥ १४४ ॥ विचार्यवददास्यंनःकष्टंलोकाः
सुखेप्सवः ॥ तस्मात्वंयत्रकुत्रापितिष्टात्रैवापणेनिजे ॥ १४५ ॥
परीक्षयंस्ताररत्नंमूर्खापरिचितेस्थले ॥ सत्यमेतद्देशिकेंद्रपरमेकं
वदाम्यहं ॥ १४६ ॥ यदाहुर्वेदविद्वांसस्तंत्रज्ञाअपिभूरिशः ॥ ध्या
नमूलंगुरोर्मूर्तिःपूजामूलंगुरोःपदं ॥ १४७ ॥ मंत्रमूलंगुरोर्वा
क्यंमोक्षमूलंगुरोःकृपा ॥ सत्यमेतद्वत्सशुद्धबुद्धेवदसियद्वचः
॥ १४८ ॥ परंकृपाकथंवास्यात्तन्नाविद्मोवयंशिशो ॥ स्वभावतो
वयंब्रूमस्तदज्ञानंसमागते ॥ १४९ ॥ परंतुलौकिकःपंथा 

यस्यसंजनयेन्मुदं ॥ सकृपामातनोत्येवसर्वशास्त्रार्थसंग्रहः॥१५०॥
सत्यंगृहीत्वामिथ्यामेऽर्पयंस्त्वंकुशलोमहान् ॥ यन्नत्वंनापितेस
त्यंतदर्पयसिमेकथं ॥ १५१ ॥ तर्ह्येतत्कस्यमायायाअस्माकंवा
स्तितद्धनं ॥ यथेष्टविनियोगार्हंतवापिचसुखप्रदं ॥१५२॥ अस्त्वे
तदधुनाब्रूहिकिंकिमस्तितवापणे॥ महांतोपिचविद्वांसोयत्रमिथ्या
भिभाषिणः ॥ १५३ ॥ असत्यंसत्यमित्येवस्थापयंतिजनेजने ॥
रसषट्केनिमग्नास्तेकामक्रोधादिनामानि ॥१५४॥ एकैकस्मिन्ह्र
देमग्नाबहवोन्योन्यवैरिणः ॥ नक्राइवमहाभीमायोद्धुकामामहा
शनाः ॥ १५५ ॥ हितंसंबोधयंस्तत्रप्राप्यतेधस्तलंजनैः ॥ को
महांस्तत्रधनवान्प्रमाणंकिंस्त्रियोघचः ॥ १५६ ॥ कस्तत्रास्तिच

मत्कारःस्वहिताद्यत्पलायनं ॥ स्वमार्गेष्वेवमद्देशेनिक्षिपंतिजना
बलान् ॥ १५७ ॥ कंटकान्वार्यमाणास्तेनिक्षिपंत्यन्यवर्त्मसु ॥
चकोरांश्चंद्रपियूषपायिनःकाकशावकाः ॥१५८॥ उलूकवृद्धाःसं
भूयानुसस्रुस्तांतिपपासया ॥ शिक्षितास्तैश्चंचुपुटंसरलीकृत्यांजिह्व
या ॥ १५९ ॥ रसंरसतचांद्रंतंयेनतृप्तावयंसदा ॥ श्रुत्वांतेसरली
कर्तुंस्वस्वचंचुंयदोद्यताः ॥ १६० ॥ तदातेव्यग्रचित्तत्वात्पतुरुर्व्यां
मुखंऽणवः ॥ तदाधूलिमुखाःसर्वेपरस्परजयैषिणः ॥ १६१ ॥ म-
यालब्धोमयालब्धोरसश्चांद्रइतिप्रथां ॥ व्यक्तीकर्तुंस्थगयितुंमिथ
आरेभिरेमुहुः ॥१६२॥ पुनःकेनापिकालेनसंभूयालोचितंचतैः ॥
शिक्षयामोवयंयैस्तुवंचितारसछद्मना ॥ १६३ ॥ तत्पीडितचकोरा

णांगतोहस्ताच्चचंद्रमाः ॥ इतितेमेनिरेभूयश्चकोराणांचचंद्रमाः
॥ १६४ ॥ मुखधूलिरसास्वादव्वासनाभिश्चतेखगाः ॥ चंद्रंचानिंद
यामासुःकलंकीतिक्षयीतिच ॥ १६५ ॥ अयमेकश्चमत्कारोदृश्यते
विषयेमम ॥ अन्योप्येकश्चमत्कारउपकारपरायणाः ॥ १६६ ॥
गुप्तापकारैर्हन्यंतेशिष्टैरपिदुरासदैः ॥ तत्रकिंगंतुकामोसिसदग्ध
स्त्वद्वचोग्निना ॥ १६७ ॥ अत्रैवकुत्रचिद्गेहेसर्वेषामप्यगोचरे ॥
त्वद्दर्शितेहंतिष्ठामितारररत्नंपरीक्षयन्॥ १६८ ॥ कश्चित्तत्रागतःपूर्वं
महारत्नपरीक्षकः ॥ शाकापणेस्थितिस्तेनकृतातत्रचशाकिनी ॥
॥ १६९ ॥ स्वशाकंस्थापयामासविक्रीणीहीतिसातदा ॥ धिक्कृ
तापणिकाःसर्वेशाकविक्रयजीविनः ॥ १७० ॥ मिलित्वापीडया

मासुगंतःस्वकापिचोरवत् ॥ अनर्थास्तत्रबहवोनगंतुंतत्रचोत्सहे ॥
॥ १७१ ॥ अत्रैवतिष्ठसुमतेत्वमेवासिनिरंजनः ॥ अतस्तेसर्वांजि
२७ ज्ञासाशांतिमेतिशनैःशनैः ॥ १७२ ॥ पित्रेवशिक्षितोनूनंमात्रेव
परिरक्षितः ॥ परमेकंप्रार्थयेहंसंचरामिनिजापणे ॥ १७३ ॥ उप
कारंस्मरन्नेवगृणन्नामानितेमुहुः ॥ भोज्यकालेयथामाताबालकं
संस्मरत्यसौ ॥ १७४ ॥ तथैवकरुणामूर्तेस्मरमांदीनकिंकरं ॥
इत्थंव्यवहरंत्येतेदत्ताद्याःसनकादयः ॥ १७५ ॥ वसंत्येतेनादम
ठेसर्ववर्णबहिष्कृते ॥ कैवल्यसिंहासनगाःपराविद्याप्रसादतः ॥
॥ १७६ ॥ तांभजस्वमहाबुद्धेपरविद्यांसुखप्रदां ॥ ययापरीक्ष्यते
त्तत्वंयेननभूयोनशोचसि ॥ १७७ ॥ तदभ्यासबलेनैवस्थितप्रज्ञोभ २७

विष्यसि ॥ सर्वैवर्णावाक्यरूपामज्जयंत्यर्थसंभ्रमे ॥ १७८ ॥
उन्मज्जयतितारोयंतेनतारःसउच्यते ॥ उत्तराण्यत्रचक्राणिप्रपं
चांतर्गतानिच ॥ १७९ ॥ नोच्यंतेशब्दरूपाणिभेदनंतूक्तमेवते ॥
तद्भेदनेनवर्णौघवेष्टितोवेध्यतेशिवः ॥ १८० ॥ यःपदानिविनिर्मा
यवाक्यानिविविधानिच ॥ सर्वाविद्याःसर्वलोकेदर्शयामासशंक
रः॥ १८१ ॥भूरादिसप्तभिःशब्दैर्लोकान्सर्वानजीजनत् ॥ एतेअ
सृग्रमंत्रेणप्रजाःससमृजेप्रभुः ॥ १८२ ॥ अन्यैरपिमहामंत्रैःसर्वं
ब्रह्मांडगोलकं ॥ विचित्रमप्यनिर्वाच्यंशेषगौत्तमसूरिणां ॥ १८३ ॥
तत्रवाक्यर्थसत्यत्वंजानन्जीवोभवच्छिवः ॥ वाक्यार्थशब्दमात्रंतु
ज्ञात्वासशिवतांव्रजेत् ॥ १८४ ॥ नादमात्रंतुतज्ज्ञात्वापुनःकैवल्य

मश्नुते ॥ कैवल्यान्नादसंभूतिस्ततोवर्णक्रमस्त्वया॥ १८५ ॥ श्रा
वितोनिर्विकारात्तदुपपद्येतवाकथं ॥ सनादःसहजानंदःशक्तिरूपः
सनातनः ॥ १८६ ॥ तत्सामरस्यपरमोनतंवर्णयितुंक्षमाः ॥ या
वन्नादोनलब्धःस्यात्तावदानंदिताकुतः ॥ १८७ ॥ एतद्रहस्यंसाशि
वोवेत्तितत्सदृशाःपरे ॥ तदनुग्रहपात्राणिजानतेदेशिकेश्वराः
॥ १८८ ॥ सनादोवर्णरूपेणपरिणामंसमृच्छति ॥ ततःसृष्टिक्रमः
सर्वोदर्पणेप्रतिबिंबवत् ॥ १८९ ॥ सृष्टौसत्यामसत्यांवाकैवल्यंतु
यथास्थितं ॥ प्रतिबिंबेसत्यसतिदर्पणोस्तियथास्थितः ॥ १९० ॥
यथासर्पेसत्यसतिरज्जुरस्तियथास्थिता ॥ मृगवारिनिभेदायकिरणा
नांयथारवेः ॥ १९१ ॥ यत्रपापंश्रमोमोहश्चिंतनंनैवविद्यते ॥ तदे

तत्परमंगुह्यमुक्तंकैवल्यसत्पदं ॥ १९२ ॥ तत्रस्थितौनियुज्यंतेसा
घनानिचसर्वशः ॥ कालात्सिद्धत्वमाप्नोतिस्थितप्रज्ञेषुगण्यते १९३
कास्थितप्रज्ञतानामयत्प्राप्तौकालयापनं ॥ श्रूयतेबोधसमयेमुक्तो
भवतिमानवः ॥ १९४ ॥ सत्यंतुबोधसमयेमुक्तोभवतिमानवः ॥
गुरुभक्तिविहीनानांसबोधःशिथिलोभवेत् ॥ १९५ ॥ तेनमुक्ति
पदंब्रह्मन्दुर्लभन्दुर्लभंनृणां ॥ शृण्वन्नेवगुरोर्वाक्यंलभतेपरमंपदं
॥ १९६ ॥ यदितीक्ष्णीकृतमतिःसाधनानिस्थितौश्रुतौ ॥ हेतव
स्तारतम्येनप्रदिशंतिस्थितिंश्रुतिं॥ १९७ ॥श्रद्धाप्रामाण्यहेतुःस्या
द्भक्तिस्तद्दार्ढ्यकारणं ॥ मुमुक्षुत्वंशुभेच्छायांविरागोविषयांतरात्
॥ १९८ ॥ व्यावृत्तिहेतुश्चशमोज्ञेयग्रहणकारणं॥ दमःकर्मांतरासं

गाद्यावृत्तौकारणंमतं ॥ १९९ ॥ तितिक्षोपरतीहेतूस्थितौसंपादिते
पदे ॥ समाधानंतुतोषेणपरमानंदकारणं ॥ २०० ॥ गुरोस्तुकरु
णाहेतुर्याथातथ्यप्रबोधने ॥ एतैश्चसाधनैर्युक्तःशृण्वन्नेवपदंव्रजे
त् ॥ २०१ ॥ सैषाचतुर्थीभूमिःस्यात्ततोवैराग्यवर्धनं ॥
तत्रानंदस्यलाभस्तुपंचमीभूमिकामता ॥ २०२ ॥ तदानंदस्यदा
र्ढ्येनभावनात्यागवान्भवेत् ॥ दिनेदिनेवर्धमानःस्थितप्रज्ञःसउ
च्यते ॥ २०३ ॥ दुर्लभोभावनात्यागोभवेच्चरमजन्मनि ॥ बहूनां
जन्मनामंतेज्ञानवांस्तत्प्रपद्यते ॥ २०४ ॥ उपदेशाधिकारस्तुतस्य
नान्यस्यकस्यचित् ॥ समाध्यंतानुभावित्वादृश्यापोहेषुकौशला
त् ॥ २०५ ॥ इतरेषांगुरुत्वंतुगुरुत्वायैवकेवलं ॥ षष्ठ्याएवहिपा

कस्तुतुर्येतिब्रह्मवादिनः ॥ २०६ ॥ यत्रप्रपंचवार्त्तैवनास्तीतिब्रह्म
वादिनः ॥ वाक्यमित्यपिवागेववर्णाइत्यपिवाक्तथा ॥ २०७ ॥
नादइत्यपिवाङ्मात्रंविस्मृतंस्वस्थितेर्बलात् ॥ तदाकिंकेनवक्तव्यं
श्रोतव्यंकेनकुत्रवा ॥ २०८ ॥ द्रष्टव्यंकेनवाकुत्रज्ञातव्यंकेनकिंत
दा ॥ विदेहत्वंसदेहत्वंयत्रनास्तिवचस्थितिः ॥ २०९ ॥ वाग्गता
क्वापिकुत्रापित्रिपुटीक्वापिकुत्रचित् ॥ ब्रह्मत्वंक्वापिकुत्रापित्वं
ताहंताक्वतत्रहि ॥ २०९ ॥ प्रबुद्धोस्मिप्रबुद्धोस्मिज्ञातंतत्वमलौ
किकं ॥ यत्रलोककथानैवकैवल्यमवशिष्यते ॥ २११ ॥ श्रीगुरोक
रुणासिंधोपात्रंपूर्णतरंकृतं ॥ त्वद्वाणीकामधेनोस्तुरसःपीतःसुधा
धिकः ॥ २१२ ॥ यथायथापिबाम्येवरसाधिक्यंतथातथा ॥ यथायथा

 रसंजानेबलाधिक्यंतथातथा ॥ २१३ ॥ किंवर्णयामितववाचमचिं 
त्यसारांकिंवर्णयामितवरूपमचिंत्यमेव ॥ किंवर्णयामिकरुणांतव
 तारगर्भांमोक्षप्रसूनतशिरःकरपल्लवांतां ॥ २१४ ॥ पुरस्थापयपादा
ब्जमर्पयामिशिरोधुना ॥ पुनःश्लिष्यामिहृष्यामिजिघ्रामिचलुठा
मिच ॥२१५॥त्वमेवमाताचपितात्वमेवत्वमेवबंधुश्चसखात्वमेव॥
त्वमेवविद्याद्रविणंत्वमेवत्वमेवसर्वंममदेवदेव॥ २१६ ॥ यन्नमृग्यं
नापहृतंनदूरेनसमीपतः ॥ ननिदानंनापिकार्यंतद्दत्तंतत्वमक्षतं
॥ २१६ ॥ अनेनसहमेदेहियाचकायकृपाकर ॥ यदुक्तंतत्स्थिरंते
स्तुसफलंचेतिमेवरं ॥ २१८ ॥ यादृशीविषयेप्रीतिस्तादृशीतव 
पादयोः ॥ अस्तुमेतत्सुधास्वादंजानेकिंचनकिंचन ॥ २१९ ॥

कांचिच्छिक्षांचमेदेहिदेहयात्रायथासुखं ॥ भवेन्मत्तोपिलो
कानांदुःखिनांचसुखंभवेत् ॥ २१९ ॥ प्रसारयब्रह्मविद्यां
शिष्यंमाकुरुकंचन ॥ ततोघातोभवत्येवघोरःकलिरुपस्थितः
॥ २२० ॥ शृणुत्वंशिष्यदुष्टाश्वान् रथेमायोजयस्वते ॥
म्रियंतेमारयंत्येतेखातपातादिभिर्बहु ॥ २२१ ॥ नत्यजंतिनि-
जंदोषंनाचरंतिहितंस्वकं ॥ शिष्यत्वंदर्शयंत्येवनशिष्यास्तेभ
वंतिते ॥ २२२ ॥ अमाययातुकथनंसागुरोर्गुरुताभवेत् ॥ अमा
ययानुसरणंसैवशिष्यस्यशिष्यता ॥ २२३ ॥ कथमेतद्द्वयाभावे
गुरुताशिष्यतातथा ॥ यत्रचैतद्द्वयंतत्रशोभतेगुरुशिष्यता ॥ २२४
एतद्द्वयंसत्यसाध्यंकलिनातद्धृतंबलात् ॥ उपहासास्पदंलोकेगु

कै. रुताशिष्यतातथा ॥ २२५ ॥ मायाभेदप्रवृत्तौतौतामेवपरिरिक्ष गा.
तः ॥ सत्यमेतत्कलियुगेकिमाश्चर्यमतःपरं ॥ २२६ ॥ एको
३१ मोचयेतपाशादेकःपाशान्तमिच्छति ॥ मोचयंतंधिक्करोतिकि
माश्चर्यमतःपरं ॥ २२७ ॥ एकश्चोपनिषद्गाथांवक्तुमारभतेपरः ॥
मंत्रेणस्तंभयेज्जिव्हांकिमाश्चर्यमतःपरं ॥ २२८ ॥ एकस्तु
लोकसंघनमैत्रीमाचरतेपरः ॥ विद्वेषयतियत्नेनकिमा० ॥ २२९
एकःकीर्तिंचलक्ष्मींचलभतेदैवयोगतः॥तांघातयत्यन्यजनःकिमा
श्चर्यमतःपरं ॥ २३० ॥ एतादृशेकलियुगेशिष्याशांसंपरित्यज
यदितच्छिष्यतासह्याकुरुशिष्यांस्तदाबहून् ॥ २३१ ॥ क्वचि
क्वचित्तुगुरवःशिष्याःसंतिक्वचित्क्वचित् ॥ उच्छेदोब्रम्हविद्याया ३१

नभवत्येवकुत्रचित् ॥ २३२ ॥ किंसाधवोनसंत्येवकलावपिख
लास्पदे ॥ यत्तदाधिकतांयातंतदद्यविरलीकृतं ॥ २३३ ॥ छद्म
सद्मविहायैताविचरंत्यन्यसद्मनि ॥ गुरोर्वाचोहरेर्भक्तिर्नीतिर्नि
पुणतातथा ॥ २३४ ॥ तस्माद्विचार्यसच्छिष्यंकुलीनंपितृशिक्षि
तं ॥ ब्रूहिकैवल्यगाथांत्वंयतःपश्चान्नतप्यसे ॥ ३५ ॥ वित्तंदास्या
मितेवत्सभिक्षापात्रंप्रसारय ॥ येनवित्तेनलोकेषुचिरंसुखमवाप्स्य
सि ॥ २३६ ॥ नैताद्दशंब्राह्मणस्यास्तिवित्तंयथैकतासमतासत्य
ताच ॥ शीलंस्थितिर्दंडनिधानमार्जवंततस्ततश्चोपरमःक्रिया
भ्यः ॥ २३७ ॥ निःसंशयंस्मरब्रह्मदेहंविस्मरमायिकं ॥ इतित्वं
बोधवित्ताढ्योयत्रकुत्रापिवावस ॥ २३८ ॥ इतिकैवल्यगाथायां

रहस्योपदेशोनामपंचमोध्यायः ॥ ५ ॥

॥ ॐ ॥ सर्वेशब्दारसक्लिन्नास्तारतम्येनसर्वतः ॥ यच्छब्दारूढ
तांयातितद्रसेसानिमज्जति ॥ १ ॥ तिरोहितःप्रमातॄणामव्युत्प
त्याक्वचिक्कचित् ॥ वक्रीकृतोनिरुद्धश्चवक्तृव्युत्पत्तितोरसः ॥ २ ॥
व्युत्पन्नत्वेद्वयोःसम्यग्रसआविस्तरांभवेत् ॥ अव्युत्पत्तौनिरुद्धः
स्याद्द्वयोरन्यतरस्यच ॥ ३ ॥ अव्युत्पत्तौद्वयोरेवरौद्रआविस्तरां
भवेत् ॥ अत्रोदाहृतयोलोकेसिद्धाएवेहसर्वतः ॥ ४ ॥ अतएव
सतांनामकीर्त्यतेसमतंसतां ॥ नकीर्त्यतेऽ सतांनामाधिकुर्वंति
चकीर्तितं ॥ ५ ॥ येनयस्योत्तमत्वंतुगृहीतंतस्यनामनि ॥ तद्रस
प्लुतगात्रःसन्नविश्राम्यतिजनःखलु॥ ६ ॥ कस्यचिच्चोत्तमानारी

कस्यचिन्नोत्तमंधनं ॥ कस्यचिन्नोत्तमंतीर्थंक्षेत्रंकस्यचिदुत्तमं
॥ ७ ॥ कस्यस्विदुत्तमाविद्याकस्यचिन्नोत्तमोजयः ॥ कस्यस्विदुत्त
मंध्यानंकस्यचिन्नोत्तमोजपः ॥ ८ ॥ कस्यस्विदुत्तमानिद्राकस्य
चिन्नोत्तमाक्रिया ॥ कस्यचिन्नोत्तमोविष्णुःकस्यचिन्नोत्तमःशिवः
॥ ९ ॥ कस्यचिन्नोत्तमाशक्तिःकस्यचिन्नगणेश्वरः ॥ विष्णोःशि
वस्यशक्तेश्चगणेशस्यरवेरपि ॥ १० ॥ स्यादेवनोत्तमःकोपिप्रमा
तृत्वस्वभावतः ॥ तेह्यत्राअपिकंचित्तुमन्येरन्नुत्तमवर्त्मना ॥ ११ ॥
यथायथाविशोकत्वमुत्तमत्वंतथातथा ॥ नाम्नांस्वस्वरसेनूनंमग्री
कर्त्तुंबलीयसी ॥ १२ ॥ शक्तिरव्याहृतातेनसर्वैष्वपियुगेषुच ॥
हरेर्नामैवनामैवनामैवममजीवनं ॥ कलौनास्त्येवनास्त्येवनास्त्ये

वगतिरन्यथा ॥१३॥ इतिव्यासादिकाःप्राहुः शब्दशक्तिमखंडितां॥ पवित्रोत्तमनामानिगृणंत्येवमहर्षयः॥ १४॥ नाममात्रंहिसर्वत्रजा-त्यैश्वर्यगुणादिकं॥संबोध्यफलदत्वेपिनशोकछेदनक्षमं ॥१५॥ शोकछेदनकृत्तारःशुद्धब्रह्मरसास्पदं ॥विशोकंतत्वमेवाहतद्रसेमज्यतां त्वया॥ १६ ॥ यथायथोपासनयातीक्ष्णीकृतमतिर्भवेत्॥ तथातथा विशोकत्वंव्यक्तीभवतिमानवे।१७। अहंताममतामूलाःशोकाःसर्वेपिलौकिकाः॥ तत्पाशद्वयमेवासौछिनात्तिसुविचारितः ॥१८॥कुतः शोकःकुतोमोहः कुतस्तोवागमागमौ॥विशोकत्वंचमोक्षश्वपर्याया ववधारय ॥ १९ ॥ परिछिन्नपदारूढोविशोकत्वंकथंव्रजेत्॥ शिवविष्णवादिनामानियोगरूढानिलौकिके ॥ २० ॥ स्वरसंनजह


३३

त्येवनीतान्येतान्यलौकिके ॥ तारस्यस्वरसः शुद्धोगुणातीतोऽक्रि
यः समः ॥ २१ ॥ त्वंताहंतातिगः सर्वकल्पनापरमावधिः ॥
स्वप्रकाशोनिराभासोऽमृग्योऽचिंत्योप्यनावृतः ॥ २२ ॥ पुरः
पश्चादधश्चोर्ध्वमितिवाचोतिदूरगः ॥ नसुप्तोनसुषुप्तोवानजाग्र
न्नतुरीयकः ॥ २३ ॥ नकर्तानापिभोक्तावानवक्तानापिचेक्षिता ॥
सर्वरूपोनसर्वोयउररीकुरुतेस्वयं ॥ २४ ॥ आत्मत्वंनत्यजन्गूढ
न्सलब्धव्योमनीषिणा ॥ अस्मिन्नर्थेगुरुमुखाल्लब्धेकिंफलमश्नु
ते ॥ २५ ॥ ग्राह्यंत्याज्यंयत्रनित्यंनिषिध्येतेफलंतदा ॥ कथंक
ल्प्यंयेनभोगत्रासस्यस्यात्परंपरा ॥ २६ ॥ किंतुभोगसमाप्त्यर्थी
निक्षिप्तस्तत्रवैपुनः॥अतोभोगत्रासमात्रक्षणेमुक्तिपदेस्थितः२७॥

कै. सधन्यःसमहावंद्यःसपित्रोस्तनयोग्रजः॥कुललक्ष्मीललामोयंशा गा.
स्त्रसाफल्यभूरयं॥२८॥ कैवल्यलक्ष्म्याःपीठोयंगुरुकारुण्यभाजनं॥
३४ येनकैवल्यमालंब्यसकलत्रासहेतवे॥२९॥ आब्रह्मकीटपाशायदत्त
स्तिलजलांजलिः॥अतःकैवल्यमोक्षेस्मिन्नफलंकल्पितुंक्षमं ३०॥
साध्यसाधनसंबंधरहितेप्रत्यगात्मनि ॥ उपासकेनैवसार्धंविशो
कलीयतेमनुः ॥ विशोकपदसंप्राप्तौतारएकोमहामनुः ॥ साध्य
साधनसंबद्धामनवोन्येनतादृशाः ॥ ३२ ॥ लभ्यलेचरमेदेहेब्रह्मी
भावप्रदोमनुः ॥ शिवविष्णवादिकाःशब्दाउपास्यैश्वर्यदर्शकाः ॥
क्रमेणमुक्तिफलदास्तारः सद्योमुक्तिप्रदः ॥ ३३ ॥ विष्णुशब्दो
यथाव्याप्तिबोधकोपिचतुर्भुजे ॥ रूढोन्यत्कृतयोगार्थोनाशरीरा ३८

र्थबोधकः ॥ ३४ ॥ बोधकत्वेपियोगार्थबलान्यक्कृतवासनः ॥
रममाणश्चक्रधरेतत्सामीप्यमुपाश्नुते ॥ ३५ ॥ तत्रतत्सहवासे
नपुनर्ज्ञानाविचारणा ॥ ज्ञातृतायावदेवास्यविचारस्तावदायतः ॥
॥ ३६ ॥ प्रमातृत्वंयदाक्षीणंतदाशाम्येद्विचारणा ॥ प्रमेयबोध
काःसर्वेप्रमातृत्वबलप्रदाः ॥ ३७ ॥ अप्रमेयपरब्रम्हबोधकःप्रण
वःखलु ॥ त्रिपुटींमर्दयित्वैवबोधयेदर्धमात्रिकां ॥ ३८ ॥ अंतः
प्रज्ञत्वादिदोषान्साधनानिचसर्वशः ॥ तिरस्कृत्यतमोहार्दंभेदयन्
वस्तुकिंचन ॥ ३९ ॥ बोधयेद्यत्रानोशोकःशोकबीजमथापिवा ॥
नहर्षोहर्षबीजंवानसाध्यंसाधनंतथा ॥ ४० ॥ नभोग्यंनाभिभो
क्तावानंनिद्रानैवजागृतिः ॥ नस्वप्नोनापिविज्ञानमज्ञानंवास्तित

त्रहिं ॥ ४१ ॥ तस्मिन्पदेनिषण्णानांप्रणवालंबिनांनृणां ॥ विली
यंतेज्ञानबलात्धृदिस्थाःशोकशर्कराः ॥ ४२ ॥ तद्विशोकपदंप्राहु
र्मोक्षंकैवल्यमित्यपि॥नैतत्पदंमंदभाग्यलभ्यंलभ्यैकभूषणं॥४३॥
दूषणंद्वैतदृष्टीनांशोषणंसर्वकर्मणां ॥ रोहणंगुरुपादाब्जभक्तिबी
जकणस्यच ॥ ४४ ॥ मुद्रणंदृश्यसंघातवासनानांचसर्वशः ॥ उ
द्घाटनमनायाससुखानांसर्वसंपदां ॥ ४५ ॥ सर्वापच्छमनींवि
द्यांलब्ध्वाकुत्रापिकेनाचित् ॥ सेव्यमानोऽसेव्यमानोयापयेच्छे
षवासरान् ॥ ४६ ॥ अन्येदृश्यावेशकारिशब्दास्त्याज्यामनीषि
णा ॥ यैश्चसंसृतिचक्रेषुभ्राम्यतेपारतंत्र्यतः ॥ ४७ ॥ यत्रयत्रो
त्तमत्वंतुगृहीतंतत्तदेवते ॥ शोकवंशंसौतितस्माद्दृश्येषूत्तमताकु

तः ॥ ४८ ॥ उत्तमंतुतदेवाहंमन्येयच्छोकनाशनं ॥ अनात्मव
स्तुनःशोकनाशिताकथमिष्यते ॥४९॥ यद्दृद्विष्यतेकालयोगान्मु
ष्यतेपिचकालतः॥ श्लिष्यतेदुःखसंघेनतदुत्तमकथाकथं ॥ ५० ॥
नद्विष्यतेमुष्यतेनोश्लिष्यतेनासुखेतरैः ॥ तद्धिशोकपदंप्राहुःकैव
ल्यतद्गुरोःपदं ॥ ५१ ॥ तदद्वितीयंतद्ब्रह्मसआत्मातत्सुखंदृढं ॥
तत्प्रापकेनतारेणसहस्वपिहितत्रवै ॥ ५२ ॥ तत्रसुप्ताः सर्वजना
यत्रजागर्षिरेशिशो ॥ तत्रस्वपिहियत्रेतेजग्रताजागताजनाः
॥ ५३ ॥ विवेकिनांविवेकोयंविविक्तेजाग्रतिर्हिया ॥ अविविक्ते
जागृतिस्तुबालानांभूषणंबलं ॥ ५४ ॥ अतएवहिशास्त्राणिविवे
चनपराणिच ॥ विवेचयित्वायत्किंचित्तत्रजागृतिहेतवः॥ ५५ ॥

के. एतदेवहिंसाफल्यंशास्त्राणांचनृणामपि ॥ सुविचारिततत्त्वेषु गा.
जागृतिर्याचभूषणं ॥ ५६ ॥ तस्माद्विवेकसंसिद्धंविशोकपरमेप
३६ दे ॥जागृतिस्तत्त्वयुक्तैवदृश्यस्वापोपिसाप्रतः ॥ ५७ ॥ यत्रस्वा
पस्ततोदुःखंकेनदृष्टंमहीतले ॥ तस्मादपिचदुःखंचेत्तस्याप्यविष
योभव ॥ ५८ ॥ अद्वितीयंपदंतस्यविषयोनकादाचन ॥ तत्रति
ष्ठसुखंभुंक्ष्वतत्रैकस्यकुतःकिमु ॥ ५९ ॥ दृश्येनपीडितस्त्वंतुभ्रम
न्सत्यधियामुहुः ॥ अद्यदृश्यांतसंप्राप्तिःसुखंस्वपिहिमीलयन्
॥ ६० ॥ बोधयत्वंचेंद्रियाणिनसंतिविषयाइति ॥ इंद्रियाणिनसं
तीतिमनोबोधयबोधय ॥ ६१ ॥ मनोनास्तीतिबुध्यस्वसुखंस्व
पिहिबालक ॥ यच्चिंतयसितन्नास्तित्वमस्यैकोनचिंत्यसे ॥६२॥ ३६

इदंतुहृदयेकृत्वासुखंस्वपिहिबालक ॥ जगदस्तीतिविश्वासपुरं
ध्रौचपलांगिका॥चिंतानाम्नीतेनसाकंदग्धाजग्ध्वाजगत्त्रयं ॥६३॥
स्वपिमिश्रीगुरोनूनंत्वत्पादकशिपौशिरः ॥ कृत्वात्वदुक्तंसंध्याय
नूरक्षायैत्वंचजागृहि ॥ ६४ ॥ जयजयामलगात्रशुचिस्मितजय
जयामलवाक्चतुराग्रणीः ॥ जयजयामरवृक्षमुमुक्षवेजयगुरोक
रुणारसवारिधे ॥६५॥ जयभवाब्धिविपन्नजनोडुपजयभवाग्नि
शमांबुवचःक्रम ॥ जयभवग्रहमांत्रिकशेखरजयमुमुक्षुविमोचन
तत्पर ॥ ६६ ॥ श्रावयंतीबहुकथाःस्वापयामासमांमुहुः ॥ माता
पिमत्कुणद्वैतव्रातशांतिः कृतात्वया ॥ ६७ ॥ अद्वैतबोधदुर्गोस्मि
नूद्वैतस्यपरमाणवः ॥ अपिप्रवेष्टुंनोशक्ताःकिमुव्यवहृतिक्षमाः ॥

॥ ६८ ॥ गुरुप्रसादोबलवान्नतस्माद्बलवत्तरः ॥ इदंदृष्टमिदं
दृष्टमिदंदृष्टंमयाधुना ॥ ६९ ॥ अन्यस्यतुप्रसादेननरोदृश्येषुमुह्य
ति ॥ देशिकेंद्रप्रसादेननरोबोधेनिमज्जति ॥ ७० ॥ नगुरोःकर्मस
द्योघादृतेकिंचनविद्यते ॥ गृह्णातिकोपिलक्षेषुततोबोधःसुदुर्लभः॥
॥ ७१ ॥ बोधस्थैर्यंतत्कटाक्षमंतराभ्यंतरंभजेत् ॥ तत्कटाक्षमहा
स्रोतःपुरःकोपिचमानवः ॥ ७२ ॥ स्यादेवसोपिमुक्तोपिसए
वस्याज्जगत्त्रये ॥ गुरोःप्रसादमहात्म्यंजानीयादपिचित्ततः ॥७३॥
ब्रूयादपिगुरोब्रूहिमद्दणेत्वंकदाकुतः ॥ पतितोसिचयेनाहमुद्धृतः
सर्वसंकटात् ॥ ७४ ॥ धन्योसिकरुणासिंधोधन्योविश्वोपकारक ॥
धन्योसिनित्यसंतृप्तस्वानंदभरनिर्भर ॥ ७५ ॥ गुरोगुरोगुरोशब्दं

न्याहरनूवर्तमानकं ॥ कालेस्थितोस्मिमुक्तोस्मिनिःशल्योस्मिनि
जास्पदे ॥ ७६ ॥ विश्रांतोस्मिविशोकोस्मिविस्मयातीतमानसः॥
शाम्यामिपरिनिर्वामितूष्णीमस्मिनकिंचन॥ ७७॥ अस्तिनास्ती
त्यादिदूरेपदेताररसेप्रिये॥ तारबाणाधिरूढोहंक्षिप्तःश्रीगुरुणामुदा
॥ ७८ ॥ फलितंपुण्यसंघेनगलितंपापसंचयैः ॥ मिलितंब्रम्ह
रत्नेनवलितंसुखसंपदा ॥ ७९ ॥ अजिह्मलभ्यांपदवींजिम्होयद्या
रुरुक्षति ॥ पक्षिगम्यान्यपिपदान्यपक्षोप्यारुरुक्षतु॥ ८० ॥ नमः
श्रीगुरुनाथायमुमुक्षुजनबंधवे ॥ लोकोत्तरफलंब्रम्हयस्यवाचि
प्रनृत्यति ॥ ८१ ॥ नमोऋगक्षरव्योम्नेनिषेदुर्यत्रदेवताः ॥
यत्ज्ञानात्सफलामंत्रायद्विज्ञानात्समासते ॥ ८२ ॥ जगतःशब्द

कै. रूपस्यगुरुस्तारः प्रबोधकः ॥ तदुपासामार्गरूढोमूढोपिचजगद्गु गा.
रुः ॥ ८३ ॥ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिता
३८ ह्यर्थाःप्रकाशंतेमहात्मनः ॥ ८४ ॥ कैवल्यगाथावाग्धेनुरर्पिता
गुरुपादयोः ॥ गुरुभक्तैर्दोहनीयापिपासात्मरसस्यचेत् ॥ ८५ ॥
यहिविश्वासपात्राणिगुरूणांगुणदर्शिनां ॥ इमांगाथांतएवेहशृ
ण्वंतुचलिखंतुच ॥ ८६ ॥ कैल्यगाथेवाग्धेनोतत्रदोग्धिनिजंरसं ॥
गुरोर्विश्वासपात्रंयोनधर्मिणिनपंडिते ॥ ८७ ॥ कृष्णकैवल्यययो
गींद्रःसच्चिदानंदपाणिभूः ॥ कैवल्यगाथामकरोत्कैवल्यंयाद्विचार
तः॥८८॥वत्सेकैवल्यगाथेत्वंसंचरस्वेच्छयाभितः॥कोपिकश्चिद्गुणैरा
ढ्योरसंतेपातुमर्हति ॥ ८९ ॥ इतिश्रीकैवल्यधामनिवासिकृष्णा ३८

नंदसरस्वतीकृतकैवल्यगाथायांविशोकोनामषष्ठोध्यायः ॥ ६ ॥
श्रीगणेशायनमः ॥ मोक्षश्चास्तिक्यसीमासकलमुनिमतश्चास्ति
रूपाविरोधात्तावन्मात्रःपरेशोहरिहररविरित्यादिरूपाणितत्र ॥ आ
स्तिक्योद्बोधनायप्रथमतनुभृताकल्पितान्यग्रिमाणांमार्गाः कर्मा
णिनानाविधफलसहितान्यत्रतत्रापितुष्टेथे ॥ १ ॥ तत्राचार्याश्च
नानाविधमतकथनाः कल्पिताउत्तराणामास्तिक्यादिष्टयेतत्सकल
मतगतंतत्वमद्धाऽविरोधि ॥ तज्ज्ञानार्थंमतानिक्रमतइतिमहादेशि
केंद्रेणदत्तोनत्याज्योनोविनिंद्यःसकलमुनिमतोधर्ममार्गः पुराणः
॥ २ ॥ तंतुर्धर्मस्यचायंमनुमुनिमहिपैर्लक्षितोरक्षितश्चप्रज्ञावद्भि
र्निषेव्योदृढतरमनसानास्तिकत्वातिभीतैः ॥ छिन्नश्चेत्तंतुरेषप्र

दिशतिचफलंनास्तिकत्वादृतस्यप्रागल्भ्याद्गाढमंधंतमइतिविबुधा
आस्तिकाश्चक्षतेस्म ॥ ३ ॥ युक्तंतद्यत्रधीरप्रतिहतगतिभाक्तत्रवि
श्रांतिमृच्छेद्दृष्टाकीटेषुयोगिष्वविहतमतिषुध्येयमात्रात्मतैव ॥
आस्तिक्याद्देवतानामपिसदृशवपुर्ध्यानभाजांतुयुक्तंलोकाः कर्मा
शयानामपिसुदृढतमप्रत्ययाच्छास्त्रजन्यात् ॥ ४ ॥ नांतंमार्गस्य
चास्यक्वचिदपिलभतेकामपाशेनबद्धः कुर्वन्कर्माणियोनिष्वथभुव
नपदेष्वंचतिस्थानजन्म ॥ कामात्त्रस्तोऽपिकश्चित्प्रकुरुतइहयः
शास्त्रपाशेनबद्धोनित्यंनैमित्तिकंवासखलुममत श्चास्तिकेष्वग्रग
ण्यः ॥ ५ ॥ यद्विश्वासाद्वयंतुप्रतिपदगहनंकर्मभूयांचरंतस्तिष्ठाम
स्तत्किमस्तीत्यहहभवतिचप्रोक्तजंतोर्विचारः ॥ नायंस्याद्धो

गकालेकृतिहृतमनसः सर्वथात्यक्तभोगस्यैवंजिज्ञासनंस्यात्तदनुगु
रुवरान्वेषणायांप्रवृत्तिः ॥ ६ ॥ ईशानुग्रहकालएवहियदा
विश्वेशमामुद्धरत्रस्तोहंजरठेजगत्यतितरांजन्माख्यखातेपतन् ।
यातान्यब्दशतानिदेशिकपदंतत्त्वावबोधक्षमंसम्यग्दर्शय मोचया
खिलकृतेरेवंमुहुःप्रार्थयेत् ॥ ७ ॥ तस्मैसप्रदिशत्यमोघवचनं
श्रीसद्गुरुंमोचकंतत्त्वाराममलौकिकंतदपिचश्रद्धादृढाचेद्भवेत् ॥
तस्मैपृछतिकर्मपाशमखिलंछित्वाकथंस्थास्यतेस्वास्तिक्यं बुधव
र्धयाखिलसुखावाप्त्यैचकर्माछिदे ॥ ८ ॥ आस्तिक्यादहमादरेणप
तितः कर्मण्यतंद्रोमुहुस्तस्मात्कर्मविमूलनंकथमितिश्रीदेशिकेंद्रो
च्यतां ॥ आस्तिक्यंतवकिंविधंवदसखेविश्वस्यबीजंतथाविश्वस्या

खिलकार्यनिर्वहनकृज्ज्ञानातिविश्वंत्विति ॥ ९ ॥ अस्तीत्येवहिवेद
नीयमितरद्रूपंगुरोः कल्पनोपासार्थंजडमानसस्यसहसाचित्तेनत
न्निष्कलं ॥ आरूढंभवतीत्युपासनविधेराचार्यपाल्यःक्रमस्तस्मा
त्सर्वमतानिमूलपदवीसोपानभूतानिच ॥ १० ॥ युक्तोप्याग्रहए
वतत्रनहिचेद्विस्त्रंसमानात्क्रमादारोढुंनहि मूलभूतपदवीशक्येतकै
श्चित्क्वचित् ॥ योयोयस्यगुरुःसतंक्रमगतंसिद्धांतकंश्रावयत्तान्नि
श्चित्यतथैवकर्मसहितस्तत्रैवविश्राम्यति ॥ ११ ॥ एवंकल्पितवि
ग्रहानुसरणात्तल्लोकरूपादिकंप्राप्नोत्यच्युतनिश्चयादथपुनर्मंदस्तु वि
स्त्रस्यति ॥ शाखाश्वंक्रमतोनकुत्रचिदपिस्थैर्यंगुरौवर्त्ततेतस्मा
न्नास्तिकबंधुरेषगदितोनिश्चित्यभावात्क्वचित् ॥ १२ ॥ सर्वस्या

पिगुरुर्विवेकजनकस्तदुत्तमत्यादरात्तत्वेतत्कथितेसहैवगुरुणाविश्रां
तिमृच्छेज्जनः॥भूयस्तत्रचयोधिकस्तदुदिततत्वेविवेकंभजेत्तल्लोका
धिपसंमतेसहपुनस्तेनैवाविश्राम्यति ॥१३॥ यावत्तत्वमवाधितंन
लभतेतावद्विवेकक्रमादूर्ध्वंगछातिहीयतेनाहिपुनः शास्त्रीयमार्गाश्र
यात् ॥ येकेचित्क्वचिदप्यनास्थितपदास्तेजन्ममृत्यूल्बणात्संसा
रात्सुविमोकमार्गविधुराविष्वंचएवासते॥ १४ ॥ येनास्तीतिविम
र्शनाधिमतयोनास्तीत्युपासारताः तेनास्तितत्वपराभिधेंधतमसिप्रे
खंत्यनावृत्तिकाः ॥ एवंकापिलगौतमप्रभृतयस्तत्वेस्वयंनिश्चित्ते
विश्राम्यंतिनयावदेवगुरुणासंदार्शितोध्वाभवेत् ॥ १५ ॥ सोपि
स्वीयगुरूपदिष्टसरणिंयच्छेत्क्रमासांचिरा दित्थंमूलगुरुप्रदिष्टसर

णौसर्वेस्थिताःशाश्वतं ॥ ब्रह्मैवाहमितिस्थितःपरगुरुःसस्वीयाशि
ष्येषुचस्वीयंज्ञानमुदाहरेन्नतुपरंदातुंसशक्तोमतः ॥ १६ ॥ कर्तृ
त्वादिकमादिशन्गुरुपदंनोविंदतेकश्चनज्ञातंतत्वमुपादिशे त्कथम
सावज्ञाताजिज्ञासुषु ॥ द्वैतंस्वेपरतंत्रतामथपुनर्भोगेक्रियालभ्यतां
कर्तृत्वंचसवेत्तिपामरजनस्तन्नोपदेश्यंभवेत् ॥ १७ ॥ शास्त्रीयाः
सगुणाःक्रियायदिदिशेत्तत्वंतुतन्नोभवेदास्तेकिंकिमुनास्तिको ह
मितितज्जिज्ञासनेशिष्यके ॥ यत्प्राङ्नास्तिनचास्तिचांततइतो
मध्येपितन्नास्तितद्भ्दानंनास्तितदेवभातिपरतः पूर्वंचयत्संस्थितं
॥ १८ ॥ शुक्तिंपश्यतिवक्तिरूपकमितिस्वाज्ञानतोमानवःशुक्ति
स्त्वैकघनैवभातिवितथारौप्यंतुरौप्यप्रभं ॥ यत्रैद्वैतमिवाद्वयेभवाति

तत्ज्ञानादिकंज्ञानवद्धोगोभोगइवप्रमाणसराणिंप्रोल्लंघ्यभानंयतः ॥
॥१९॥ यत्कालत्रयमस्तितत्स्पसहसैवाच्छादकंकिंभवेद्यन्नास्त्येव
तदीयभानजनकंकिंवाभवेत्तद्वद ॥ स्वाविद्यैवहितद्द्वयस्यजननीस
त्तानचेष्याऽसतोनाभावःसतइष्यतेमुनिवरैरूपापहानिर्यतः ॥२०॥
अस्तित्वंपरमार्थरूपमसताप्राप्येतकस्माच्चसतूनास्तीतिप्रथते ऋते
ऽज्ञजनतांसद्देशिकानाश्रितां ॥ नाभावःसतइष्यतेनचपुनर्भा
वोसतोपीष्यतेतस्माद्द्वयसत्स्वरूपममलंत्वंस्वस्थतामाप्नुहि ॥
॥ २१ ॥ भोगःकुत्रचकुत्रकर्मगहनंद्वैतंक्वत्वासंस्थितंयावन्नैवविचा
रणेंद्रियगतंसत्त्यंतुतावद्भवेत् ॥ यस्मादिंद्रियवर्गएषसुमतेनाकां
क्षतेभासनेदृश्यानांपरमार्थतांमतिमतांजिज्ञासनंकांक्षते ॥ २२ ॥

अस्तित्वंत्वपहायकिंवदसखेदृष्टंत्वयाकुत्रवास्वर्णत्वंतुविहायकुत्र-
चिद्दहोलंकारमीक्षेतकः॥तस्मादस्तिविभातियत्तदहमित्यंतर्दृढंनि
श्चयंसंस्थाप्यस्वसुखेनकर्मगहनात्तीर्णोसिपूर्णोसिच ॥ २३ ॥ एवं
दत्तविवेकपूर्णहृदयो ऽस्तित्वाख्यतत्वेपरेविश्राम्येद्गुरुणासहैववि-
बुधोनावृत्तिमत्यद्वये ॥ यस्मान्मूल गुरुक्रमादयमिहप्राप्तोस्तिमार्गो
महान्यद्रूपेस्वगुरुःप्रयातिसहसाशिष्योपितत्क्रमात् ॥ २४ ॥ आ
स्तिक्यस्यफलंगुरुक्रमगतंचास्तित्वमात्रास्थितिर्यस्मिन्भातिचरा
चरंचविविधंयद्भातिसर्वत्रहि ॥ मृत्सत्तामतिलंघ्यकास्तिकलशोस
त्तासतःकल्पितेसर्वात्मत्वमतः सतस्त्तदुरीकुर्वंश्चसार्वात्म्यभाक्
।२५। तंतुर्ज्ञानाख्यएवंनिगदितइहतेयंसमालंव्ययज्ञाद्गच्छेत्तत्परमं

पदंसकलदृङ्नारायणोयत्रहि ॥ अर्वाचीनमतावलंबिमनुजोप्यर्वा
कूपदेसंविशेदास्तिक्यंदृढमस्तिचेत्परपदंगच्छेच्चसोपिक्रमात् २६।
एवंनिरूपितौतत्तूज्ञानधर्माभिधौमया ॥ आस्तिक्यमूलावाल्व्यफ
लमस्तित्वमश्नुते ॥ २७॥ अव्यक्तंव्यक्तिमापन्नंमन्यंतेमामबुद्ध
यः ॥ परंभावमजानंतोममाव्ययमनुत्तमं ॥ २८ ॥ नाहंप्रकाशः
सर्वस्ययोगमायासमावृतः॥ एवंप्राहार्जुनायेदंतत्वंकृष्णःकृपाकरः
॥ २९ ॥ तस्मात्कल्पितरूपाणिभजन्कल्पितरूपधृक् ॥ उत्तरो
त्तरमुत्कृष्टंपदंगच्छेच्चकल्पितं ॥ ३० ॥ धर्मएवसचोद्दिष्टःकर्मसा
ध्यत्वचोदनात् ॥ नज्ञानंतत्वविश्रांतेरभावात्कर्मयोगिनि ॥ ३१ ॥
तत्वज्ञानेपिचेत्कर्मपाशच्छेदःकदाभवेत् ॥ कर्तृत्वमेवपाशस्याज्ञो

गगर्तनिपातनः ॥ ३२ ॥ तच्छेदार्थंज्ञानमिष्टमतःप्राहार्जुनंहरिः ॥
सर्वपाशछेदकारिमर्कत्यागंकृपाकरः ॥ ३३ ॥ सर्वधर्मान्परित्य
ज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचः
॥ ३४ ॥ आस्तिक्यमूलायेधर्मानास्तिकानांचयेमताः ॥ सर्वा
स्तान्संपरित्यज्यतत्वनिष्ठोभवानघ ॥ ३५ ॥ तन्निष्ठायांचयत्किं
चित्पापंकर्तृत्वनामकं ॥ तच्छिद्यतेऽकर्तृताततादात्म्यादस्तिरूपतः
॥ ३६ ॥ श्रुतिरप्याहतत्त्यागंत्यागेनैकेमृतंययुः ॥ ज्ञानात्प्राक्सा
धनंत्यागोज्ञानादूर्ध्वंतुलक्षणं ॥ ३७ ॥ ज्ञानमप्याहभगवान्न
सत्तन्नासदुच्यते ॥ एकत्वान्नोच्यतेसत्तदद्वितीयंकथंवदेत् ॥३८॥
असंभवात्प्रपंचस्यनासदित्यपिचोच्यते ॥ सदसद्द्वागतीतंतत्सत्ता

मात्रंपरंपदं ॥ ३९ ॥ नशून्यसमतातस्यतद्भावीजडतामियात् ॥
इदमंधंतमःप्रोक्तंयज्जडत्वंप्रमातरि ॥ ४० ॥ सद्भावीसुखचिद्रू
पसत्तामात्रस्वरूपधृक् ॥ मुक्तइत्युच्यतेयोगीवेदांतैर्बुधसंमतैः ॥
॥ ४१ ॥ योयद्भावयतेनित्यंसतदेवभविष्यति ॥ योगमार्गेप्रसि
द्धंतद्योगःस्याद्भावनैवहि ॥४२॥ एतन्निदिध्यासनंस्यात्कीटदृष्टां
तसंभवः ॥ कस्यचित्बलवच्छ्रद्धायुक्तस्यैवभविष्यति ॥ ४३ ॥
कस्यचित्बुद्धियुक्तस्यगुरुवाक्यसमंभवेत् ॥ उपदेश्यैकरूपत्वंचर
मंजन्मयस्यहि ॥ ४५ ॥ इदंतेनातपस्कायनाभक्तायकदाचन ॥
नचाशुश्रूषवेवाच्यंनचमांयोभ्यसूयति ॥ ४५ ॥ इतिगोप्यतमंत
त्वज्ञानमास्तिक्यहेतुकं ॥ अर्जुनेहरिणाप्रोक्तमुक्तंतत्कृष्णभिक्षु

णा ॥ ४६ ॥ धर्मपक्षोज्ञानमार्गेपदमाधातुमर्हति ॥ महापुरुषतो
लब्ध्वाज्ञानंमुच्येतपाशतः ॥ ४७ ज्ञेयात्मतांनिश्चयानुरूपांकोवा
श्रयेदिह ॥ तथागुर्वनुरूपत्वंशिष्यस्यदृढचेतसः ॥ ४८ ॥ इतिश्री
कृष्णानंदसरस्वतीविरचितंसर्वमता विरोधिगुरुमार्गफलकथनं
नामकैवल्यगाथायांसप्तमोध्यायः ॥श्री॥ अस्तीतिनिश्चित्यकरो
षिकर्मनास्तीतिनिश्चित्यजहासितत्तु ॥ कर्माग्रहश्चेत्तवनास्तिताया
निश्चित्यभावोनुमितोमतोनः ॥ १ ॥ नास्तीतिबुद्धस्यचदृश्यवर्गेतृ
प्तिर्विरागोपशमादिचिन्हं ॥ अस्तीतिबुद्धस्यपदेपदेस्यात्कामादि
दोषप्रभावात्क्रियापि ॥ २ ॥ मृत्सत्यताबोधदृढस्यद्रष्टौनिमज्जति
स्वेकलशोनिदाने ॥ कथंहितत्सुंदरतानिमित्तोरागोथवाद्वेषउदार

बुद्धेः ॥ ३ ॥ मृत्सत्यतातुल्यतयैवदृष्टाघटेपिसत्तायदितर्हिरागः॥
कामोथलोभःप्रशमंनयातिसत्याभिषेकिंशममेतिचेतः ॥ ४ ॥
विश्वस्यविश्वस्यचसत्वमद्धानिदानसत्वंस्थगयत्यततज्ज्ञः ॥ निदा
नसत्तामतिलंध्यकावाकार्येषुनिर्लक्षणकेषुसत्ता ॥ ५ ॥ बुध्नोदरा
दीन्यपहायकोवाघटोस्तितल्लक्षणसंगरंगः ॥ बुध्नोदरादीनिमृ
दाश्रितानिमृद्येवतल्लक्षणसंप्रवृत्तिः ॥ ६ ॥ बुध्नोदरादीनिच
लक्षणानिमृदाघटस्यापिनयोगभांजि ॥ अव्याप्तितोऽसंभवतःक्र
मेणतस्माद्घटोदुर्घटएवलोके ॥ ७ ॥ घटत्वजातिर्ननुयत्रदृष्टास
एववाच्यस्तुतदानुपूर्व्याः ॥ चेदित्थमात्थाथसएवपृष्टःकिंलक्षणः
कुत्रचवाविभाति ॥ ८ ॥ बुध्नोदरंलक्षणमस्यरूपंचेत्कंबुकंठोपि

तथानकिंस्यात् ॥ घटत्वजातिःक्कचसंभृतास्यात्व्यासज्यवृत्तिर्न गा.
हिजातिरिष्ठा ॥ ९ ॥ जात्येकतावाकलशैकतावास्वरूपपक्षेतवबा
धनीया ॥ द्वित्वादिवन्नित्यतयाविमुक्ताजातिःप्रतीयेतमतेतवैव
॥ १० ॥ तस्माद्धटोनामनविश्रुतोपिपृथङ्मृदोदर्शनमज्ञतैव ॥ अ
लंकृतिर्हैमभिदांभजेच्चेन्मूल्यद्वयंत्वंलभसेकुतोपि ॥ ११ ॥ अतो
भिदादर्शनमेवतृष्णाविवृद्धिहेतुंप्रवदंतिसंतः ॥ भेदापनोदा
न्नकृतेविचारफलंप्रकल्प्यंप्रशमाभिघातात् ॥ १२ ॥ अलं
कृतौभेदमपोह्यहेम्नस्तन्मूल्यतृष्णामतिवर्ततेज्ञः ॥ अविद्यमा
नंबतविद्यमानेप्रकल्प्यतेयत्नशतेनधीरैः ॥ १३ ॥ अविद्य
मानंत्यजतिस्वकीयमविद्यमानत्वमनंतरंच ॥ सुविद्यमानत्वम

पीहतद्वजेच्चित्रंकिमस्मादपरंमतेते ॥ १४ ॥ अयः शलाका
त्यजतुस्वकीयमयस्त्वमारोहतुहेमताऽत्र ॥ धर्मीयतोऽविद्यतएवत
त्रकार्यद्वयंयत्रविमृश्यतेज्ञैः ॥ १५ ॥ अविद्यमानंयदिकार्यकारि
वेदांतिभिः कस्तुकृतोपराधः ॥ मृन्नोजलादानकृतौसमर्थाघटो
नसन्मायिकमेवसर्वं ॥ १६ ॥ अंगीकृतेनापिसुतेनवंध्याचेदाप्त
कामाकलशेनतद्वत् ॥ भवान्कृतार्थोभवतुप्रभूतंनांगीकृतिर्वस्तु
विचारसह्या ॥ १७ ॥ वस्तुस्थितिः कामयतेकदाचिदंगीकृतिं
चान्यकराश्रयांचेत् ॥ अंगीकृतेः पूरुषतंत्रतैवततोन्यथाकिंनभवे
त्पदार्थः ॥ १८ ॥ विचित्रतांवारयितुंकईष्टेधियांततोनंतमतानि
लोके ॥ तत्वंततःकिंविविधस्वरूपंततोमतानांभ्रमतैवयुक्ता ॥१९॥

परस्परव्याहतिचिंतनेनप्रमाणताकस्यमतस्यमान्या ॥ स्वांगीकृ
तंस्वेतरवेद्यतायादूरेततःस्वाग्रहजीवितंतत् ॥ २० ॥ यदाग्रहाय
त्तविभासनंतत्सत्यंकथंकुत्रचकेनदृष्टं ॥ तदेकवेद्योवतरज्जुसर्पः
सत्यत्वमृच्छेच्छतथापिदृष्टः ॥ २१ ॥ यथांधकारस्यसुतोभुजंगो
रज्जौनिवासंतनुतेयथेच्छं ॥ तथाघटः संतनुतेमृदादौभेदेनवाऽभे
दतएवसोस्तु ॥ २२ ॥ गतेतमस्याग्रहबीजभूतेभुजंगवत्क्षीयतए
वतेघटः॥निजैकवेद्याप्रकृतिःशिवोणवस्तमः सुतास्तेनसहापयंति
॥ २३ ॥ दृष्टौनिरूढंतुतमोरविर्हरेत्बुद्धौचरूढंतुतमोविचारः ॥
येनाग्रहस्त्याज्यतएवसर्वैः संत्यज्यतंमार्गयतांक्वविश्वं ॥ २४ ॥
अस्तिनास्तीत्याग्रहंचेत्त्यजेत्पुरुषपुंगवः ॥ मोक्षलक्ष्मीसुखंतेनल

ब्धंचरमजन्मना ॥ २५ ॥ अयंसमाधिःकैवल्यंशुद्धाब्राह्मीस्थि
तिःस्मृता ॥ वागतीतापराकाष्टाज्ञानस्यपरमोवधिः ॥ २६ ॥
विधिर्वापिनिषेधोस्यकिंकरःशंकरस्याहि ॥ आत्मानात्मविभाग
स्यवार्तायस्माद्बिभेतिहि ॥ २७ ॥ समाधिरेषनिर्बीजः प्रोक्तः कृ
ष्णेनभिक्षुणा ॥ सर्वाविरोधिसंस्थेयंव्युत्थानंनास्यविद्यते ॥ २८ ॥
भेदाभेदावजानंतोबालालीलांवितन्वते ॥ अजानन्सदसद्भावौत
थाक्रीडतिपंडितः ॥ २९ ॥ सदसद्वादमाश्रित्यपरिश्रांताःसुपंडि
ताः ॥ स्वस्वाग्रहंपरित्यज्यकुतोनस्थीयतेसुखं ॥ ३० ॥ कारणेसद
सद्भावमाश्रित्यैकेविवादिनः ॥ कार्येकेचनतस्मात्तुस्वाग्रहःकलह
प्रियः ॥ ३१ ॥ अन्याग्रहगृहीतंतुनस्वगोचरतांभजेत् ॥ परिशि

ष्टः स्वाग्रहस्तुत्याज्यः सर्वैर्मनीषिभिः ॥ ३२ ॥ यस्यामतंमतंतस्य
मतंयस्यनवेदसः ॥ इतिश्रुतिः सर्वमतत्यागात्तत्वाप्तिवादिनी ॥
॥ ३३ ॥ वृद्धाअपिवदंत्येवंबुध्धेःफलमनाग्रहः ॥ यदाग्रहगृहीतं
स्यात्तत्कथंतत्वमिष्यते ॥ ३४ ॥ इहैवतैर्जितःसर्गोयेषांसाम्येस्थि
तंमनः ॥ निर्दोषंहिसमंब्रह्मतस्माद्ब्रह्मणितेस्थिताः ॥ ३५ ॥
यदाग्रहमृतेसिद्धंतत्समंसर्ववादिनां ॥ आग्रहोत्थाविशेषास्तुनिर्वि
शेषंमतंसतां ॥ ३६ ॥ तस्मादाग्रहसंत्यागात्सत्तामात्रावलंबनं ॥
समाधिरुक्तःसर्वेषांमतोनिर्वीजनामकः ॥ ३७ ॥ संकल्पमात्रमे
वैतज्जगन्मिथ्यात्वमुत्थितं ॥ तदसंकल्पमात्रेणलीयतेक्वापिव
स्तुनि ॥ ३८ ॥ अविचारेणतत्त्यागोयोगइत्यभिधीयते ॥ सद्वि

चारेणतत्त्यागोमोक्षइत्यभिधीयते ॥ ३९ ॥ स्वस्वाग्रहगृहीतेषुनि
रोधोहठनामकः ॥ विचारसिद्धेविश्रांतीराजयोगउदाहृतः ॥ ४० ॥
यत्रतत्वमृतेकिंचिन्नभातिनचपश्यति ॥ एषसर्वश्रुतिमतोराजयो
गउदाहृतः ॥ ४१ ॥ संगस्तुविषयाणांमेमाभूदितिवनेक्वचित् ॥
स्वलाभतुष्ट्यासंसुप्तीराज० ॥ ४२ ॥ स्वातिरिक्तंनाकिंचित्तुनिः
संगत्वंसदामम ॥ एवंसभासुविश्रांतीराज० ॥ ४३ ॥ मायामयंम
यिनाहिनाहंमायामयेपिच ॥ इतिकूटस्थविश्रांतीराज० ॥ ४४ ॥
अस्तीतिप्रतिपन्नस्यविशेषेवादइष्यते ॥ तथाभातिप्रियमितिप्र
तिपन्नस्यचेष्यते ॥ ४५ ॥ सर्ववादान्परित्यज्यतत्तदाग्रहसंभवान् ॥
सच्चित्सुखेसमेसंस्थाराजयोगउदाहृतः ॥ ४६ ॥ अन्वयाद्भातिसर्वत्र

व्यतिरेकेचाशिष्यते ॥ तत्त्वेज्ञानिनःसंस्थाराजयोगउदाहृतः ॥
॥ ४७ ॥ यथापुत्रेकलत्रेवानिश्चयाद्रमतेजनः ॥ तथाविचारितेसं
स्थाराज० ॥ ४८ ॥ यत्रव्युत्थानशंकैवनोदेतिसुविचारिते ॥ तत्र
संस्थैवसहजाराज० ॥४९॥ अवस्थात्रयमात्रंहिविश्वंत्वयिविभा
सते ॥ पश्यत्वंमृगवारीवराजयो० ॥ ५० ॥ मायामात्रंब्रह्ममात्रं
विश्वंवपश्यसकौतुकं ॥ मावापश्यसुखंतिष्ठराजयोगउदाहृतः ॥
॥५१॥ शंकायामूलविच्छेदःसमाधिरभिधीयते ॥ एषएवाज्ञतानाशे
मोक्षोयंसुखशेवधिः ॥ ५२ ॥ येनयस्यप्रसंगःस्यात्सतत्तत्व
विनिर्णयात् ॥ सुखमाप्नोतिविश्वस्यतत्वंज्ञात्वासुखीभव ॥
॥ ५३ ॥ विश्वस्यतत्वमस्तित्वंतवेशरूपापितन्मतं ॥ कथं

विभेदमालिंग्यदुःखीभवसिसन्मते ॥ ५४ ॥ अस्तित्वेनिर्वि
शेषेपिभेदश्चेद्गौतमःकथं ॥ विशेषान्भेदविज्ञानहेतूनंगीकरोतिहि
॥ ५५ ॥ अस्तित्वेपिविशेषश्चेतत्सामान्यंचकिंभवेत् ॥ यद
भेदव्याप्यतास्यविशेषस्यमतंतव॥५६॥सामान्यानतिरेकित्वंविशे
षस्यमतंयदि ॥ सामान्यंसर्वरूपेणभातीतितवसंमतं ॥ ५७ ॥
सर्वरूपेणयद्भातितदेकंतत्वमुच्यते ॥ अतात्विकत्वंरूपाणामंगीकृ
तमहोत्वया॥ ५८ ॥ यदितान्यपितत्त्वानिसामान्याभेदसंभवः ॥
विशेषइतिकस्मात्तेमतेसमुपपद्यते ॥ ५९॥ तस्मादस्तित्वमेवै
कंजीवविश्वेशनामकं ॥ विशेषास्तेऽत्रसर्वाल्पज्ञतेविश्वंचतद्वपुः ॥
॥ ६० ॥ क्वास्तिविश्वंक्वसर्वज्ञःक्वजीवःक्वचबंधनं ॥ निरिधंने

सच्चिदग्नौविचारेणहुतंतव॥ ६१ ॥ एषानिर्बीजताप्रोक्तासमाधेर्वेद
वित्तमैः॥ अंतःप्रज्ञत्वादिदोषमुक्ततत्वसमाश्रितैः ॥ ६२ ॥ अस्ती
त्येवोपलब्धव्यस्तत्वभावेनचोभयोः ॥ अस्तीत्येवोपलब्धस्य
तत्वभावःप्रसीदति ॥ ६३ ॥ इतिकाठकमंत्रोपिसन्मात्रमविशे
षकं ॥ तत्वंप्राहततःसौम्यतत्रविश्रांतियाप्नुहि ॥ ६४ ॥ अप्रे
मयंपरंब्रह्मयतोवाङ्मनसातिगं ॥ जगदप्यप्रमेयंतुतदंतर्वाङ्मनो
यतः ॥ ६५ ॥ अचिंत्यरचनारूपंजगत्कोवर्णयेज्जनः॥ अचिंत्य
मद्वयंतत्वमपिवर्णयतेकथं ॥ ६६ ॥ तस्मान्मौनंसमालंब्याचिंतां
संत्यज्यदूरतः ॥ यत्रकुत्रवसत्वंतुतत्रकाशीस्वयंभवेत् ॥६७॥ स्व
स्वप्रमांचसंत्यज्यसामग्रीविरहात्स्वयं॥प्रमातृतांचसंत्यज्यातिष्टत्वं

मुग्धबालवत् ॥ ६८ ॥ पश्यपश्यशिशुंदुग्धस्निग्धमुग्धास्यमांति
कात् ॥ अपश्यन्सदसद्वापिपश्यन्स्वपितिमातरं ॥ ६९ ॥ त्वदा
दिष्टपदेनूनंविश्रांतिमगमंगुरो ॥ अगृण्हन्नत्यजन्वापिविश्रांतिंस
हजांगतः ॥ ७० ॥ असंभवाद्द्वैतशांतिरबाधादद्वयस्थितिः ॥
अवबुद्धानुभूताचकिमतःपरिशिष्यते ॥ ७१ ॥ अद्वितीयाववोधे
नद्वैतंतुसहकर्मभिः ॥ दग्धंदावाग्निनायद्वद्विपिनंसहजंतुभिः ॥
॥ ७२ ॥ अस्तीतिनिश्चितंतत्वमस्मीतियदिबुध्यते ॥ सर्वात्मता
तस्यसिद्धामुक्तस्यांतिमजन्मनः ॥ ७३ ॥ यस्मिन्सुखोशिवःसा
क्षाद्यत्रश्रीरमणोहरिः ॥ यत्रशक्तिःसर्वविद्याविग्रहापद्मजस्तथा ॥
॥ ७४ ॥ सनकाद्यावशिष्टाद्यादत्तशेषशुकादयः ॥ तत्रतिष्ठनि

कै. रावाधेपदेनैश्चित्यनामनि ॥ ७५ ॥ श्रीदेशिकेंद्रपादाब्जमकरंद गा.
मधुव्रतः ॥ कृष्णानंदोपितत्रैवक्रीडतिश्रीगुरोर्मुदे ॥ ७६ ॥
५० इति श्रीकैवल्यगाथायांकृष्णानंदसरस्वतिविरचरितायांसहजनि-
र्वी जसमाधिनामाष्टमोध्यायः ॥ ८ ॥

अंगानामिंद्रियाणांवामनसोथतवापिच ॥ अंतरस्पंदमालब्धंतत्तत्वंपरमंपदं ॥ १ ॥ नजाग्रतानस्वपतानसुषुप्तेनवापुनः ॥ नलब्धंनापिसंत्यक्तंतत्तत्वंपरमंपदं ॥ २ ॥ नध्यायतानब्रुवतानापिकर्मपरेणच ॥ अपन्होतुंशक्यतेयत्तत्त्वं० ॥ ३ ॥ जाग्रत्स्वप्नःसुषुप्तिर्वायेनास्तीतितिनिगद्यते ॥ नोच्यतेयन्नकेनापितत्तत्वं० ॥
॥ ४ ॥ अस्त्यस्यस्मीतिसहसाव्यवहारंतनोतियत् ॥ विचारेमूक ५०

तांयातितत्तत्वं० ॥ ५ ॥ भातिभासिचभामीतिव्यवहारंतनोति
यत् ॥ विचारेभानमात्रंयत्तत्तत्वं० ॥ ६ ॥ यःस्वतंत्रःप्रियोभूत्वा
परतंत्रंप्रियंभजन् ॥ लब्धंसुखमितिस्वस्थस्तत्तत्वं० ॥७॥ यस्मि
न्स्वप्नोविलीयेतसुषुप्तिर्जाग्रतिस्तथा ॥ यस्मिन्नेवविभासेतत
त्तत्वं० ॥ ८ ॥ येनैवदृश्यतेविश्वंविश्वंयच्चनपश्यति ॥ सदास्वस्थं
समाभासंतत्तत्वं० ॥ ९ ॥ यद्गोचराःप्रमाणानिप्रमाणागोचरंच
यत् ॥ सर्वसिद्धंस्वयंज्योतिस्तत्तत्वं० ॥१०॥ यदानंदेनेंद्रियाणिका
योवाङ्मनसेअपि॥स्पंदंतेस्वस्वविषयेतत्तत्वं० ॥११॥ यल्लब्ध्वाशां
तिमाप्नोतिहर्षशोकंजहातिच ॥ सदेहंविस्मरेद्विश्वंतत्तत्वं०॥१२॥
यस्मिन्नात्मतयालब्धेतृणवन्मन्यतेजगत् ॥ स्वानंदेतृप्तिमाप्नो

तितत्विष्णोःपरमंपदं ॥ १३ ॥ यन्नभूतंभविष्यद्वावर्तमानंसदैव
यत् ॥ नगोचरोनस्थगितंतद्विष्णो० ॥ १४ ॥ नपरोक्षंनापरोक्षं
नित्यभातमशब्दकं ॥ ऋतेगुरुंनयद्भातितच्छैवंपरमंमहः ॥ १५ ॥
यदंतर्यद्बहिश्चापियन्नांतर्नबहिस्स्मृतं ॥ अगम्यंचनिरालंबंतच्छैवं
परमंमहः ॥ १६ ॥ यद्भातिसर्वरूपेणनसर्वंयत्परावरं ॥ नपरंना
वरंचापितच्छाक्तंपरमंमहः ॥ १७ ॥ यदेवशब्दमहसाभातिवि
श्वात्मकंपुनः ॥ शब्देनैवाद्वयंसिद्धंतच्छाक्तंपरमंमहः ॥ १८ ॥
यदिंद्रियगणाध्यक्षमिंद्रियागोचरंपुनः ॥ इंद्रियाणामिंद्रियंचतदेत
ग्गाणपंमहः ॥ १९ ॥ नयद्भासयतेविश्वंविश्वंयेनचभास्यते ॥
प्रकाशनिरपेक्षंचतत्सौरंपरमंमहः ॥ २० ॥ निष्कलंनिरपेक्षंचक

र्णवेधैकसाधनं ॥ अलक्ष्यंयोगगम्यंचतदेतद्भैरवंमहः ॥ २१ ॥
संसारभीरुलोकानामभयंयदूद्वयातिगं ॥ नादैकबोध्यममलंतदे०
॥ २२ ॥ षडध्वसुविभात्येवषडध्वास्पृष्टरूपकं ॥ षडध्वशोधसं
वेद्यंतदेतच्छांभवंमहः ॥ २३ ॥ जगताशोभतेयत्तुजगद्येनचशो
भते ॥ अज्ञानमात्रस्थगितंश्रीकृष्णाख्यंपरंमहः ॥ २४ ॥ यच्छ
ब्दमूलंशब्दानांविचारेणविभासते ॥ शब्दान्वेतिग्रसत्यद्धात
देतद्व्याकृतेर्महः ॥ २५ ॥ तारमात्रैकसंवेद्यंतारकंयत्नमंत
रा ॥ सर्वशाखाप्रतीतंचतदेतद्वैदिकंमहः ॥ २६ ॥ अहमित्येवय
द्भातित्वमित्यप्युच्यतेजनैः ॥ त्वंताहंतैक्यरूपंयत्तत्त्वंपरमंपदं ॥
॥ २७ ॥ अहंतेदंतयोर्भातितदूद्वयत्यागमात्रतः ॥ सामरस्यंभज

 त्यज्ज्ञातत्त्वंपरमंपदं ॥ २८ ॥ चिंतयाजायतेदूरेनैश्चिंत्यात्प्रथते 
स्वयं ॥ निष्कलंनिर्विकल्पंचतत्त्व० ॥ २९ ॥ सुप्तेष्वपिचभूतेषु
 तूष्णींजागर्तियत्सदा ॥ स्वपंतिजाग्रतायत्रतत्त्त्वं० ॥३०॥ तत्व
त्रिंशच्छ्लोकमालाकंठेयेनकृतासता ॥ कैवल्यसिंहासनगस्तृप्तो
भवतिमानवः ॥ ३१ ॥ एतत्तत्वपदंप्राप्ताःकेचिन्मूकाःपिशाच
काः ॥ भवंतिविस्मृतप्राणामत्ताबालाजडाअपि ॥ ३२ ॥ श्री
गुरोकरुणासिंधोसम्यक्तत्त्वंनिरूपितं ॥ परंतुममतुब्रह्मत्वत्कृपैवे
तिमेमतिः ॥ ३३ ॥ कल्पवृक्षोयदादातुंफलानीष्टानियाचके ॥
प्रवृत्तःस्यात्तदाहस्तैःकियद्भिःकुरुतेंतिके ॥ ३४ ॥ नदातातृप्तिमा
यातिपात्रेदानेनकुत्रचित् ॥ कुपात्रमपिनोतृप्तिमायातिसकलैः 

फलैः ॥ ३५ ॥ सद्गुरुर्दुर्लभोलोकेसच्छिष्योपिततोधिकः ॥
उभयोःसंगमोमोक्षवार्तालक्ष्मीललामकः ॥ ३६ ॥ इतिश्री
कृष्णानंदसरस्वतीविरचित कैवल्यगाथायांतत्वनिरूपणंनामनव
मोध्यायः ॥ ॐ तत्सत्ब्रह्मार्पणमस्तु ॥

श्रीगणेशायनमः ॥ त्वदूक्ततत्वनिष्ठामेयथादृढतराभवेत् ॥ तथो
पदिशहेनाथभगवन्भक्तवत्सल ॥ १ ॥ यथामेसफलंजन्मयथैव
शरणागतिः ॥ यथात्वदुपदेशश्चसफलःस्यात्तथावद ॥ २॥ जाले
निपात्यनामानिरूपाणिविविधानिच ॥ उपहासेप्रवृत्तानिनाकिंत्वं
परिपश्यसि ॥ ३ ॥ क्रियाजालंभोगजालंगलेतेपतितंसखे ॥
पश्चात्तापैकफलदंतस्मान्मुक्तस्तुपूरुषः ॥ ४ ॥ भोगजालछेदनेन

क्रियाजालंविनश्यति ॥ भोगजालंदृढतरंतच्छेत्तानरपुंगवः ॥
॥ ५ ॥ भोगजालेदृढेछिन्नेदृढवैराग्यधारया ॥ निर्मूलंकर्मजा
लंतुस्वयंकालेनशुष्यति ॥ ६ ॥ भोगजालस्यकामाद्याग्रंथयः
षडुदाहृताः ॥ नित्यपुष्टारसक्लिन्नास्ताविवेकेनशोषयेत् ॥ ७ ॥
शुष्कासुतासुभवितावैराग्यंविषयाननु ॥ धर्मनिष्ठस्यवैराग्यंमुमु
क्षुत्वायकल्पते ॥ ८ ॥ तेनसन्मार्गनिष्ठास्याच्चित्तैकाग्र्यमुपासने ॥
उपासनापक्वमतौतनोतिकरुणांहरिः ॥ ९ ॥ तेनप्रेमोद्गमाच्चित्ते
समुद्भवतिसुंदरः ॥ कथंकदालभेयंतदीश्वरस्यपदांबुजं ॥ १० ॥
येनसंतारिताःपूर्वैब्रह्माद्याःसनकादयः ॥ प्रल्हादाद्यागजेंद्राद्याद्रौ
पद्याद्याश्चकाश्चन ॥ ११ ॥ भगवन्करुणासिंधोमामुद्धरभवांबुधेः ॥

त्रस्तोहंजन्ममृत्युभ्योभोगेभ्यःकर्मतोपिच ॥ १२ ॥ इत्थंरोदिति
कुत्रापिदृष्ट्वाहसतिपामरान् ॥ स्मृत्वापिस्वचरित्राणिक्वचिद्धस
तिरोदिति ॥ १३ ॥ स्मृत्वातदैश्वरंरूपंक्वचिन्नृत्यतिगायति ॥ बि
भेतिसंगान्मूर्खाणांसत्संगंचसमिच्छति ॥ १४ ॥ देहेगेहेकलत्रेवापु
त्रेसुत्रामपत्तने ॥ रमतेक्वापिनोरागात्स्वोपास्यविरहातुरः ॥१५॥
कदामिलसिहेकृष्णकदामिलसिशंकर ॥ कदामिलसिहेतारेकदा
मिलसिहेगुरो ॥ १६ ॥ एवंब्रुवाणोरण्येषुखेटकेपत्तनेथवा ॥ संचर
न्खेदमाप्नोतिस्वप्रयोजनतत्परः ॥ १७ ॥ विधिंवापिनिषेधंवाश
त्रुवन्मन्यतेतदा ॥ यथाकामीकाम्यमानसुंदरीरतिलालसः॥१८॥
नरकोप्यस्तुमेशश्वदभीष्टंफलमश्नुयां ॥ किंमेलाभेनहान्यावाय

त्रनोकामितंफलं ॥ १९ ॥ कदाचिद्वार्तयातस्यस्वाभीष्टस्यफल
स्यच ॥ हृष्यत्यथोखिद्यातिचरोदित्यपिहसत्यपि ॥ २० ॥ कस्या
दभीष्टसंसिद्धिमार्गदोममभोचकः ॥ इतिसंप्रार्थयन्नंतर्नामान्येव
वदत्यसौ ॥ २१ कृष्णस्यविरहेराधाराधायाविरहेहरिः ॥ कृष्ण
कृष्णेतिराधेतिगृणीतेरमतेनहि ॥ २२ ॥ योयत्कामःसतल्लाभ
मंतरारमतेकथं ॥ रमेतचेत्तदाकामीमोक्षेवाविषयेनहि ॥ २३ ॥
इत्थंश्रांतस्यदैवेनक्वचित्सत्संगमोभवेत् ॥ तत्रशृण्वन्ब्रह्मवार्ता
मजानन्नपिहृष्यति ॥ २४ ॥ जानंतमनुकुर्वाणंधिक्करोतिपरी
क्षितं ॥ जानात्येवेतिविश्वासःकुत्रापिचभविष्यति ॥ २५ ॥
तदापृच्छतिहेनाथयःसतांहृदयंगमः ॥ सर्वोत्तमः सर्वनाथःसर्वा

धारःक्वतंवद ॥ २६ ॥ सर्वोत्तमस्तुसर्वत्रनोचेत्सर्वोत्तमःकथं ॥
सर्वोत्तमः परिच्छिन्नइतिवागेवदुष्यति ॥ २७ ॥ परिच्छिन्नत्व
रूपेणसर्वसाम्यंमहेशितुः ॥ ननिवारयितुंशक्यंदेशांतरनिवासि
नः ॥ २८ ॥ सर्वत्रचेत्कामयेतस्वाश्रयंसर्वशद्धितं ॥ सर्वंय दा
श्रितंभातितत्कथंकामयेद्धरिः ॥ २९ ॥ पूर्णत्वमीश्वरस्येष्टंसर्वैर
पिचतैर्थिकैः ॥ तत्रान्यस्यप्रवेशस्तुनकथंचिद्भविष्यति ॥ ३० ॥
पूर्णत्वंतुतदेवस्याद्यत्रान्यस्यप्रवेशनं ॥ दुर्घटंतत्रविश्वस्यकथानै
वोपपद्यते ॥ ३१ ॥ यथास्वर्णेलंकृतिभिःस्वपूर्णेचस्वयंघने ॥
प्रवेष्टुंनैवशक्येततथैवजगतेश्वरे ॥ ३२ ॥ यद्यलंकारसंस्थातेस्व
घनेपिचहेमनि ॥ इष्टास्यात्तदभेदेनप्रतिबिंबवदिष्यतां ॥ ३३ ॥

 ननुवायुर्यथाव्योम्निपूर्णेप्यस्तिचरत्यपि ॥तथाविश्वस्यसत्ताचेत्का
हानिर्भेददर्शिनः ॥३४॥ यथावियत्परेतत्वेतथावायुर्वियत्यपि॥पूर्ण
त्वस्याविरोधेनास्थितिःकल्प्यामनीषिणा ॥३५॥ नाभेदमंतरापूर्णे
स्वघनेवस्तुनिकचित् ॥वस्त्वंतरंदृष्टचरंहेम्न्यलंकारवत्सतां ॥३६॥
विरलावयवेद्रव्येद्रव्यांतरसमागमः॥ प्रकाशानांजलानांवायथैवा
स्तिसमागमः ॥३७॥ घनेनवयवेवस्तुन्यहोवस्त्वंतरंकथं ॥ वर्तेता
वयवान्भिद्याज्जह्याद्वासंस्थितिःकथं ॥ ३८ ॥ आद्येनवयवंवस्तु
भंगात्सावयवंभवेत् ॥ द्वितीयेवयवाभावःप्राप्नोत्यवयविन्यपि ॥
॥ ३९ ॥ गुणजात्यादिवत्सत्ताचेत्तदाप्ययमेवहि ॥ न्यायःसंचार
णीयःस्यादुभयोर्घनतायतः ॥ ४० ॥एतेनविभुवस्तूनांभेदःसर्वो 

निराकृतः ॥ घनत्वव्याहतिर्भियासदेकंतुबहूकृतं ॥ ४१ ॥ यथा
शुक्तिगतंरौप्यंशुक्त्यैवघनतांगतं ॥ मिथ्येतिगीयतेतद्वद्विश्वंब्रह्म
घनंस्मर ॥ ४२ ॥ एषसर्वोत्तमोदेवोयद्धनंभातिवैजगत् ॥ सएव
त्वंत्वमेवैषजगच्छब्देनभण्यसे ॥ ४३ ॥ त्वमेवज्ञायसेवेदैरध्यारो
पापवादिभिः ॥ त्वमेवध्यायसेयोगैर्विषयोनहिकस्यचित् ॥ ४४ ॥
त्वमपिस्वंनजानीषेकुतोन्यःकल्पितस्त्वयि ॥ विश्वंजानामीतित्व
दस्यात्मानंनेतिवक्षिच ॥ ४५ ॥ जानासिचेज्ज्ञानरूपःस्वप्रकाशो
निराकृतिः ॥ त्वयिभातिजगत्सर्वंभासित्वंकुत्रकस्यवा ॥ ४६ ॥
गुणेविश्वंनपश्यामिनवेद्मिस्वमपिस्वयं ॥ नजागर्मिनसुप्तोस्मि
नजडोस्मिकिमद्भुतं ॥ ४७ ॥ वत्संब्राह्मीस्थितिरियंत्वादृशेनै

वलभ्यते ॥ ईशानुग्रहपात्रेणमुमुक्षुशिखरेणहि ॥ ४८॥ अहंतांम
मतांहित्वाज्ञप्तिरूपेणसंस्थितिं ॥ पार्थायप्राहभगवान्स्वपार्थक्य
निवृत्तये ॥ ४९ ॥ विहायकामान्यःसर्वान्पुमांश्चरतिनिस्पृहः ॥
निर्ममोनिरहंकारःसशांतिमधिगच्छति ॥ ५० ॥ एषाब्राह्मीस्थि
तिःपार्थनैनांप्राप्यविमुह्यति ॥ स्थित्वास्यामंतकालेपिब्रह्मनि
र्वाणमृच्छति ॥ ५१ ॥ त्वंताहंतायावदास्तितावदीश्वरसंगमः ॥
कथंसेतौदृढेवारिसामरस्यायकल्पते ॥ ५२ ॥ सेतौभग्नेस्वयंवा
रिसामरस्यपरायणं ॥ तथात्वमहमिच्छिन्नेआत्मासमरसोभवेत्
॥ ५३ ॥ परोक्षीकृत्ययत्वंतुदुःखवाधौंनिपातितः ॥ मोहेनसतु
नष्टस्तेविरहःशांतिमागतः ॥ ५४ ॥ अतएवाहभगवानर्जुनाय

सतांपतिः ॥ शिष्यायस्वरहस्यंतुज्ञानीत्वात्मैवमेमतं ॥ ५५ ॥
आत्मीभूतेभगवतिकिमन्यत्परिशिष्यते ॥ रहस्यसुखमास्वाद्यतु
ष्णींतिष्ठसुखांबुधौ ॥ ५६ ॥ गुरोदयालोत्वद्वाणींशृण्वन्नेवहरेःपदं॥
लब्धवांस्तेकिंनुदास्येयाचेयाचकपुंगवः ॥ ५७ ॥ त्वत्पादपद्मम
करंदमधुव्रतोहंत्वत्पादसेवनाविधौतुधृतव्रतोहं ॥ भूयासमेवबहु
जन्मसुमोक्षकांक्षावृक्षाद्विहंगमइवस्वहृदोजगाम ॥ ५८ ॥ कच्चि
तेचित्तमाधत्तेस्वास्थ्यंयद्विरहातुरं ॥ कच्चिल्लब्धंपदंतत्तुकच्चित्वंकृ
तकृत्यकः ॥ ५९ ॥ कृतंकर्तव्यमखिलंप्राप्तंप्राप्तव्यमेवमे ॥
भवत्समागमादीशःसर्वतोदृश्यतेमया ॥ ६० ॥ अहंकृष्णस्त्वंच
कृष्णःसर्वंकृष्णमयंजगत् ॥ यद्दुःखदंममाभूत्तत्सुखदंसुखरूप

धृक् ॥ ६१ ॥ सर्वंब्रह्ममयंविश्वंमन्मयंत्वन्मयंतथा ॥ पश्यामि
कृपयातेद्यगतोमेविरहज्वरः ॥ ६२ ॥ सर्वंप्रियतमंमेद्यभातित्व
त्कृपयागुरो ॥ इतस्ततोमेश्रीकृष्णःसच्चिदानंदविग्रहः ॥ ६३ ॥
यस्तारबोध्यःसर्वात्माप्येकात्माद्वैतवर्जितः ॥ मिलितोमेप्रियत
मःकुतःशोकःकुतोभयं ॥६४॥ दर्शंदर्शंत्वदुदितमहोसर्वतोरूपमे
कंगाढंगाढंममहिमनसाश्लिष्यतेरज्यतेच॥ आनंदाश्रुण्यहहनयने
मुंचतःसिंचतोमांस्मारंस्मारंतवहिवचनंनृत्यमाविष्करोमि॥६५॥
गाढस्नेहस्तवपदयुगेनित्यमास्तांदयाब्धेवाणीनामान्यहहमधुरा
ण्याचिनोतुप्रकामं ॥ कामःक्वापित्वदुदितमहाचित्प्रकाशाग्निद
ग्धाश्चिंतारत्नंसकलमभवच्छ्रीगुरोःसंगमेन ॥ ६६ ॥ किंवापश्यसि

हेवत्सविश्वंवाब्रह्मवानिजं ॥ पूर्वानुभूतविश्वेस्मिन्कोविशेषःप्रदृ
श्यते ॥ ६७ ॥ विश्वंनाहंवेद्मिगुरोस्वप्नवत्स्मर्यतेधुना ॥ अस्ति
नास्तीत्यादिदूरंवस्तुकिंचनविद्यते ॥ ६८ ॥ यदापश्याम्यहंविश्वं
तदापश्येयमीदृशं ॥ त्वन्मात्रंब्रह्ममात्रंवामन्मात्रंवेतिमेमतिः ॥
॥ ६९ ॥ हेमज्योतिष्यलंकारज्योतिरस्तंगतंयथा ॥ ब्रह्मज्योति
षिविश्वाख्यज्योतिरस्तंगतंद्रुतं ॥ ७० ॥ सर्वज्योतिःपरंब्रम्हत
ज्ज्योतिःश्रीगुरुर्मतः ॥ त्वज्ज्योतिषिपरब्रम्हज्योतिरस्तंगतंगुरो
॥ ७१ ॥ मज्ज्योतिरर्पितत्रैवसमीभूतमहोधुना॥किंवच्मिपृच्छ्य
तेकिंवातुभ्यमस्तुनमोनमः ॥ ७२ ॥ किंकालंवर्णयाम्यद्यकिं
तमीशंकृपाकरं ॥ किंत्वांदीनोद्धारदक्षंकिंमांवाभाग्यशालिनं ॥

॥ ७३ ॥ अभूद्यस्तुमदुद्धारहेतुःकालोखिलार्थदृक् ॥ फलदानैक
दक्षायनमःकालायबंधवे ॥ ७४ ॥ येनसंदर्शितःसाक्षाच्छ्रीगुरुः
करुणाकरः ॥ मदुद्धारसमर्थायनमस्ताद्भरयेमुहुः ॥ ७५ ॥ येन
ब्रह्मीकृतंसर्वंमयासहतयासह ॥ वाचापितस्मैगुरवेनमस्तुभ्यंमहा
त्मने ॥ ७६ ॥ येनानंदोदधिर्लब्धःशोकसागरयादसा ॥ तस्मै
मह्यंभाग्यवतेनमश्चरमजन्मने ॥ ७७ ॥ सफलीकृतमद्वाचेविफ
लीकृतकर्मणे ॥ निखिलीकृतविश्वायाशिष्यायाशीस्सदामम ॥
॥ ७८ ॥ संदिग्धंनैवमंतव्यमसंदिग्धंनसंत्यजेत् ॥ शिरसा
धारयाज्ञांमेयेननभूयोनशोचसि ॥ ७९ ॥ संदिग्धंदृश्यमात्रं
स्याद्बहवोयत्रवादिनः ॥ असंदिग्धंस्वप्रकाशंतच्चत्यक्तुंनशक्य

ते ॥ ८० ॥ दृश्यमात्रंनजानेहंयत्रतेब्रह्मवादिनः ॥ असंदिग्धंस्व
प्रकाशमेकमेवावशिष्यते ॥ ८१ ॥ अद्वितीयब्रह्मबोधोद्दृढस्ते
जातएवहि ॥ अतः परंत्वंमुक्तोसियथेच्छसितथावस ॥ ८२ ॥
तवपाशद्वयंनष्टमद्वितीयात्मबोधतः॥विद्वच्छ्लाघ्योसिमान्योसिय
थेच्छसितथावस॥८३॥विश्वंनपश्यतोंधस्ययथापादक्रमोभवेत् ॥
वर्तितव्यंचगंतव्यंवक्तव्यंतेनतत्तथा ॥ ८४ ॥ नांधस्यकूपपातेन
दोषः कश्चनसज्जते ॥ आरोहेणगिरेः श्लाघानोभयंतस्यवैगुणः ॥
॥ ८४ ॥ अतएवहिदत्ताद्याःशास्त्रातीताश्चपूरुषाः ॥ वसिष्ठाद्याः
शास्त्रबद्धाउभयेज्ञानिनः समाः ॥ ८५ ॥ अतः केचिज्जडामू
काबालामत्ताः पिशाचकाः ॥ शिष्टाभ्रष्टाश्चकेचित्तुवर्तनंनसमं

सतां ॥ ८६ ॥ नजानंतियतोदेहंसप्रपंचंसहेतुकं ॥ जानंतीववि
भांत्येवयतः सुप्ताजगत्स्थितौ ॥ ८७ ॥ सुप्ताएवहितेशिष्यांशि
क्षयंतिजगन्नहि ॥ एकंब्रह्माद्वयमितितन्नचित्रमिदंशृणु ॥ ८८ ॥
यतोगुरुक्रमः सर्वोप्येवमेवमहीतले ॥ विस्मारयंतिस्वादृष्टंस्वदृ
ष्टंशिक्षयंतिच ॥ ८९ ॥ यद्युभावपिविश्वज्ञौतुल्यौतौगुरुशिष्य
कौ ॥ विशेषेगुरुतातस्यतत्ज्ञातस्यैववृद्धये ॥ ९० ॥ अविचार
दशायांयदृष्टंतत्तुयथास्थितं ॥ तस्याविरोधिकिंचित्तुशिक्षयन्नगुरु
र्भवेत् ॥ ९१ ॥ अविचारदशादृष्टबाधायैवमहाजनाः ॥ वेदाःशा
स्त्राणिसर्वाणिवाचोयुक्तिश्चलौकिकी ॥९२॥ आबाल्याद्यज्जगदृ
ष्टंविचारनिरपेक्षकं ॥ विचारज्ञानपश्यंतिबोधयंत्यपिनेतिच ॥

॥ ९३ ॥ स्वयंपश्यतियद्वस्तुतन्नास्तीतिकथंवदेत् ॥ यन्नदृष्टंस्व
यंवस्तुतत्कथंप्रतिपादयेत् ॥ ९४ ॥ तस्माद्विश्वांधएवात्रविश्वं
नास्तीतिबोधयेत् ॥ अद्वितीयेजाग्रतस्तुबोधयेदद्वयंशिवं ॥
॥ ९५ ॥ शिष्यप्रारब्धवेगेनशिष्यमात्रेतुजागृतिः ॥ इयमीशकृ
पाशिष्येविश्वांधःशिष्यदर्शनः ॥ ९६ ॥ नतारसदृशोमंत्रोविश्व
ग्रासैकतत्परः ॥ नवेदांतसमंशास्त्रमुपपत्तिनिरूपकं ॥ ९७ ॥ नमु
मुक्षुसमःशिष्योयत्रवाक्सफलागुरोः ॥ नविश्वसुप्तसदृशोगुरुर्ग
म्यैकवेदनः ॥ ९८ ॥ लब्धंकिंपरमंधामपूर्णंसर्वोत्तमंचयत् ॥ बाधि
ताकिंजगद्बाधाययादीनोभवज्जनः ॥ ९९ ॥ त्वद्वाक्श्रवणमात्रेण
लब्धंधामानिवर्तनम् ॥ जगद्वार्तापिनोयत्रबाधातत्रचकीदृशी

॥ १०० ॥ यथाब्रह्मांबुधौमग्नःशृण्वन्वाचःसुनिर्मलाः ॥ तवोप-
कारक्षीराब्धौतद्वद्देवहिहेगुरो ॥ १०१ अज्ञानांधस्यलोकस्यज्ञानां
जनशलाकया ॥ चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः ॥ १०२ ॥
आबाल्यलब्धंविश्वंयद्वचसैवहृतंपुनः ॥ अदृष्टंयत्कृपादत्तंतस्मै०
॥ १०३ ॥ आत्मसत्तांपश्यतैवविश्वसत्तानदृश्यते ॥ इतिबो
धोयेनदत्तस्तस्मै० ॥ १०४ ॥ ईशाभीतंजगत्सर्वंनियर्तिनैवमुं
चति ॥ यद्भीतंलीयतेक्कापितस्मै० ॥ १०५ ॥ विश्वहास्ति
समूहस्यभेत्ताश्रवणगोचरः ॥हृद्गुहावासिसिंहायप्रणवायनमोनमः
॥ १०६ ॥ यस्मिन्कर्णौविशत्यद्धापियूषमयतांजगत् ॥ आपेदेचि
त्रचारित्रप्रणवायनमोनमः ॥ १०७ ॥ ब्रह्मणोयःसमुद्भूतोब्रह्मीभू

तंकरोतियः ॥ उपासकंचविश्वंचप्रणवायनमोनमः ॥ १०८ ॥
इतिश्रीकैवल्यगाथायांश्रीतत्वनिष्ठादृढीकरणंनाम दशमोध्यायः॥
यावन्नजागृतोबोधःस्वस्मिंस्तावज्जगत्स्थितिः ॥ शुक्तावजागृतः
पुंसोरजतस्यस्थितिर्यथा ॥ १ ॥ शुक्तौसुषुप्तपुरुषस्ययथैवरौप्यं
सुप्तस्यतद्वदपिचात्मनिविश्वसंस्था ॥शुक्तौतुजागृतिरपोहतिरौप्य
मद्वाबोधेपिजागृतिरपोहतिविश्वसंस्था ॥२॥ रौप्यंतुशुक्तिघनमे
वविभातियद्वद्विश्वंचबोधघनमेवविभातितद्वत् ॥ विस्मृत्यशुक्ति
घनतांघनमाहरौप्यंतद्वच्चबोधघनतामपहायविश्वं ॥ ३ ॥ उत्प
त्स्यमानमिहसर्वमहोनिदानगाढंनिगूढमिवभातिनिदानमेव ॥
एतद्विचित्ररचनानिजविस्मृतिस्था तस्याअपोहकुशलाननुदेशि

कोक्तिः ॥ ४ ॥ विस्मृत्यजागृतिगतंननुदेहगेहंस्वप्नेप्रपश्यातिव



पुर्गृहमन्यदेव ॥ तच्चापिविस्मृतिपथंनयतासुषुप्तिर्दृष्टास्वविस्मृति



घनास्वघनाप्यवस्था ॥ ५ ॥ पूर्वानुभूतसदृशाःपुनरेवपश्यत्य

त्थेतिताश्चमनुतेतनुतेप्रकामं ॥ कर्माणिगच्छतिपुनःपुनरेवलोका

नूर्ध्वाधरानतिबुभुक्षुतयान्यतंत्रः ॥ ६ ॥ वाचोशृणोद्यदभिधान

पराश्चतत्रजागर्तिविस्मृतिपदंनयतेचपूर्वं ॥ इत्थंचशब्दरशनासि

तएवजंतुर्वाकृतंतिबद्धनरसंगमतोतिदुःखी ॥ ७ ॥ स्वस्वा

धिकारमनुरुध्यवदत्यतज्ज्ञः कर्माणिलोकनिवहानपिकाम्यमाना

न् ॥ श्रोतापिसंमनुतएवहिकामतंत्रोजागर्तिकर्मणिफलेपिचस

त्यबुद्धिः ॥ ८ ॥ यावत्फलेषुबतकर्मभवेषुजंतुर्जागर्त्यनात्मसुतम

स्यपिरक्षसीव ॥ तावद्भयंसमनुतेपरिहारमिच्छन्मार्गाश्रितंमृदुम
तिंशरणंकरोति ॥ ९ ॥ वक्येवतत्वमतिहीनतयान्यदेवानाराध्य
यासिनभयंक्वचिदेवकाले ॥ भूयोघनाभवतिबोधसुषुप्तिरद्धा
देवानवैतिपरतत्वमितिप्रकामं ॥ १० ॥ नोवेत्तिविस्मृतिदशा
सुसमुत्थितांस्तान्स्वंवासमांसमनुतेबतवस्तुसत्तां ॥ द्रष्ट्रादिकां
त्रिपुटिकामपिवेत्तिसत्यांतावन्निशीथइवसंतमसंप्रवृद्धं ॥ ११ ॥
बोधांबरेऽस्मृतिघनेतडितोहिवाचोधर्मार्थकामनिवहंपुरुषार्थरूपं ॥
संदर्शयंतिनिजभासनमस्तियावत्तावद्विभासमहह क्षणिकार्थजातं
॥ १२ ॥ योयद्विलोकयतितत्रचसप्रवृत्तोबिद्युत्प्रकाशमवलं
ब्यकदाचिदेव ॥ प्राप्नोतिकश्चिदपिमध्यतएवविद्युत्पातेननाश

मुपयातितमोंधतांवा ॥ १३ ॥ लब्ध्वापिकश्चिदिहखिद्य
तिवज्रपातादंधोथवाभवतितत्रतडिल्लयेन ॥ एवंचविस्मृतिघनो
त्थतडित्प्रकाशमालंब्यखिद्यतिनजागृतिमेतिकोपि ॥ १४ ॥ दै
वाच्छरद्धनघटागुरुराजनाम्नीसंयातिसांद्रकरुणारसपूर्णगर्भा ॥य
त्रैवनिक्षिपतिविंदुकणान्स्वकीयान्मुक्तास्तएवततएवलवेतिचित्रं
॥ १५ ॥ आविष्करोतिनिजगर्जनशब्दपूगंसोसीतिबोधतनुरो
मितिसाप्रगल्भं ॥ नेहास्तिकिंचननिजस्मृतिहीनचित्खेत्वंजागृहि
श्रममृतेसुखमेषिविद्वन् ॥ १६ ॥ एवंनिशम्यगुरुमेघसमुद्भवं
तंजागर्तिकश्चिदिहसर्वनिवृत्तकामः ॥ यावद्धनस्वनमहोस्मरति
स्वचित्तेतावन्नकिंचिदपिदृष्टिपथेस्तिविश्वं ॥ १७ ॥ अहोकुत्र

गतोमेघोयत्स्वनंशृण्वतोमम ॥ क्षणादनर्थनिवहःकुत्रापिविलयं
गतः ॥ १८ ॥ तदुत्थाःशब्दनिवहाः एवमेहृदयंगताः ॥ तएवमे
गुरुःसाक्षादन्वहंबोधकारिणः ॥ १९ ॥ तैःसहैवविनोदेनयदा
क्रीडामिचेतसा ॥ तदैवाद्वयरूपंमेस्मृतिमेतिपदेपदे ॥ २० ॥
यदास्मरामिमद्रूपंविस्मरामिजगत्तदा ॥ तस्माद्विस्मृतिरेवात्र
कारणंविश्वदर्शने ॥ २१ ॥ विस्मरामियदात्मानंनस्मरामिजग
त्तदा ॥ सुषुप्तिर्नामसावस्थायदानाहंनवैजगत् ॥ २२ ॥ आत्मा
नमपिविश्वंचसंस्मरामिसमंयदा ॥ तदातरंगवद्भातिमयिविश्वं
कदाचन ॥ २३ ॥ संस्मरामिनिजंरूपंकिंजिद्विश्वंस्मराम्यहं ॥
तदेदंमृगवारीवभातिविश्वंकदाचन ॥ २४ ॥आत्मानंसंस्मराम्ये

 



यविस्मरामिजगत्तदा ॥ शुक्तिसंस्मृतिवेलायांरौप्यवत्क्वगतंज
गत् ॥ २५ ॥ यदादृढतरारूढासंस्मृतिःस्वात्मवस्तुनि ॥ तदै
तच्छशशृंगाभंमुक्तिसीमेयमिष्यते ॥ २६ ॥ एतावद्बोधसंदात्रेन
मोगुरुघनायते ॥ यस्यविद्युत्स्वप्रकाशस्सकृद्भातातिनिर्मला ॥
॥ २७ ॥ भवितव्यमनेनेत्थमित्याग्रहमहागिरिः ॥ यद्वाग्वज्रेण
निर्भिन्नोनमोगुरुघनायते ॥ २८ ॥ नमोस्तुतमहावाक्यगर्जना
यघनस्थितिं ॥ विलाप्यबोधलीनायसद्योजागृतिहेतवे ॥ २९ ॥
नमस्तारायशब्दायगुरुमेघोद्भतायते ॥ स्वपदएवयेनाहंजागृत
स्थिरतांगतः ॥ ३० ॥ मांविस्मृत्यमयैवैतन्निद्रायांकल्पितं
जगत् ॥ मयैवबुद्धंभूयोपिमयिलीनंसवेदकं ॥ ३१ ॥ सर्व

स्यचाहंहृदिसन्निविष्टोमत्तःस्मृतिर्ज्ञानमपोहनंच ॥ वेदैश्चसर्वै
रहमेववेद्योवदांतकृद्वेदविदेवचाहं ॥ ३२ ॥ एवंयांप्राहभगवान
र्जुनायनिजांस्थितिं ॥ तामद्यदृष्टवानद्धामदन्यःकोस्तिसर्वकृत्
॥ ३३ ॥ मत्सुप्तौसर्वमेवैतन्मयादृष्टमहोधुना ॥ मयैव
जागृतिंनीतोजागरन्नहमद्भुतं ॥ ३४ ॥ मयैवरचितावेदामयैव
गुरुमूर्तिना ॥ बोधितःशिष्यरूपोहममुंचन्निजजागृतिं ॥ ३५ ॥
जाग्रन्निदमर्थेहंजागृतिंनीतवान्पुनः ॥ अहमर्थेस्वप्रकाशेमाम
हंमहदद्भुतं ॥ ३६ ॥ जागरन्निद्रितःप्रोक्तोनिद्रितोपिचजागरन् ॥
नोभयंमयिसंभाव्यंदृष्टाकाचिच्चमत्कृतिः ॥ ३७ ॥ यानिशासर्व
भूतानांतस्यांजागर्तिसंयमी ॥ यस्यांजाग्रतिभूतानिसानिशाप

श्यतोमुने: ॥ ३८ यदुक्तंयदुनाथेनस्वानुभूतिरहस्यकं ॥ ज्ञातंतद
धुनानूनंपूर्वंदृष्टंगतंक्वचा ॥ ३९ ॥ अवबुद्धोसिमुक्तोसिवत्सजाग
र्षिजागृतौ ॥ पुनःस्वपिहिविस्मृत्यत्वांमामीशंश्रुतिंजगत् ॥४०॥
यथायथाविस्मरासिसुखाधिक्यंतथातथा ॥ त्वदीयसुखलेशेनसर्वे
जीवंतिजंतवः ॥ ४१ ॥ शृणुयाद्यइमांगाथामात्मजागृतिकारि
णीं ॥ सुविचार्यसजागर्तिशिवोभवतिचाद्वयः ॥ ४२ ॥ इतिश्री
कैवल्यगाथायांविस्मृत्यपोहोनामैकादशोध्यायः ॥ श्री ॥ यथाप
श्येत्तथाविश्वंभातिबुद्धेर्गुणस्तुसः ॥ बुद्धिश्चगुरुणादत्तासंप्रदायइ
तीर्यते ॥ १ ॥ कश्चित्पश्यत्यणूनेवतदारब्धंचकश्चन ॥ कश्चिद्गुण
मयंवेत्तिकश्चित्कर्ममयंतथा ॥ २ ॥ कश्चिन्मनोमयंवेत्तिकश्चि

त्स्मृतिमयंतथा ॥ कश्चिद्भूतमयंवेत्तिकश्चिन्नित्यंपपश्यति ॥३॥
अनित्यंवेत्तिकश्चित्तुसत्यमित्यपिकश्चन॥कश्चिन्मायामयंवेत्तिक
श्चिच्छब्दमयंतथा ॥ ४ ॥ कश्चिदीशमयंवेत्तिकश्चित्कालमयं
तथा ॥ कश्चित्सुखमयंवेत्तिकश्चिद्दुःखमयंबहु ॥ ५ ॥ कश्चि
द्ब्रह्ममयंवेत्तिकश्चिदात्ममयंतथा ॥ नैवपश्यतिकश्चित्तुयथादृष्टि
स्तथाजगत् ॥ ६ ॥ यंभावंदर्शयेद्यस्यतंभावंसतुपश्यति ॥ तंचा
वतिसभूत्वासौतद्ग्रहःसमुपैतितं ॥ ७ ॥ इतिप्राहुर्गौडपादाःशुक
शिक्षितबुद्धयः ॥ गुरुहस्तगतंसर्वंबंधोमोक्षोजगत्तमः ॥ ८ ॥
अनात्मदृष्टिर्विज्ञेयमात्मदृष्टौविलीयते ॥ पराक्प्रत्यग्दृशोर्नूनंवि
रुद्धत्वात्परस्परं ॥९॥ श्रुतिःप्रत्यग्दृशंप्राहनेहनानास्तिकिंचन ॥

सर्वमात्मैवेदमितिप्रतीचिद्वैतबाधनं ॥ १० ॥ यथैवशिक्षितोजंतु
स्तथासपरिपश्यति ॥ अद्वैतशिक्षितैर्विश्वंनदृष्टमितिकिंब्रुवे॥ ११॥
नानाविधाद्वैतशिक्षाअतोनानाविधादृशः ॥ मिथआश्चर्यकारिण्य
स्ततःप्राहहरिःस्वयं ॥ १२ ॥ आश्चर्यवत्पश्यतिकश्चिदेनमाश्चर्यव
द्वदतितथैवचान्यः ॥ आश्चर्यवच्चैनमन्यःशृणोतिश्रुत्वाप्येनंवेदन
चैवकश्चित् ॥ १३ ॥ मिथःसंमत्यभावेनकोपिनोवेदमानवः ॥
अन्योन्यमप्रसिद्धत्वादाश्चर्यंचपरस्परं ॥ १४ ॥ किंसर्वादृष्टयोयु
क्ताःकिमयुक्ताश्चदृष्टयः॥इतिचेद्यत्रयच्छिक्षातांयुक्तांमन्यतेजनः
॥१५॥ब्रम्हैकशिक्षितस्त्वंतुनविश्वंपरिपश्यसि ॥ यदिपश्यसितद्वि
श्वंब्रम्हमात्रंहिपश्यसि ॥ १६ ॥ यथामृगजलंदृष्टमपिनोतृप्तिकार

णं॥श्रमतापैकफलदंतन्निवृत्तिःसुखावहा ॥१७॥ अतःसर्वाणिशा
स्त्राणितन्निवृत्तिपराणिच ॥ यतोनानाविधंदृष्टमपिनोतृप्तिकार
णं ॥ १८ ॥ यदितृप्तिर्भवेत्तस्मान्ननिवर्तेतकोजनः ॥ दुःखबु
ध्द्यानिवर्तेतमृगाइवमरूदकात् ॥ १९ ॥ मिथ्यायत्तद्दुःखरूपंयत्स
त्यंतत्सुखंस्मृतं ॥ सत्यमिच्छतिनासत्यंनसत्याद्विनिवर्तते ॥२०॥
सत्यमस्तिमृषाऽयातिमृगवारीवचातपे॥ सत्यंपश्यतियन्मिथ्यापं
डितोपींद्रजालवत् ॥२१॥ तस्मात्सच्चित्सुखेतत्वेमृषादुःखात्मकं
जगत् ॥ यथापश्येत्तथाभातिशिक्षाधीनोहिमानवः ॥ २२ ॥
मयात्वंशिक्षितोवत्सबोधादर्शेमलेजले ॥ प्रतिबिंबमिवेक्षस्व
तद्रूपेणैवसंस्थितं ॥ २३ ॥ अथवानेतिपश्यत्वंदृष्टेर्दूरंपलाय

ते ॥ बोधोऽस्तिबोध्यंनास्त्येवस्वप्नवच्चेंद्रजालवत् ॥ २४ ॥
श्रद्धामयेजगत्यस्मिन्नचित्राभिन्नदृष्टयः ॥ श्रद्धामुत्पादयंत्ये
तेगुरवःस्वस्वदर्शने ॥ २५ ॥ श्रद्धामयोयंपुरुषोयोयच्छ्रद्धः
सएवसः ॥ इत्युक्तरीत्याविंदंतेस्वगुरूक्तेनवर्त्मना ॥ २६ ॥
अणून्वाप्रकृतिंचापिब्रह्मवादेवताअथो ॥ यतःफलंगुर्वधीनंतस्मा
ज्ज्ञात्वागुरुंश्रयेत् ॥ २७ ॥ अनात्मज्ञोगुरुर्यस्मादनात्मगतिमा
दिशेत् ॥ आत्मघातोयमेवोक्तोयदनात्माभिमानिता ॥ २८ ॥
अभिमानोद्विधाप्रोक्तोममाहमितिरूपतः ॥ तद्द्वयंयस्यसंनष्टं
तमात्मज्ञंप्रचक्षते ॥ २९ ॥ एतद्द्वयंतदानश्येद्यदैवाद्वयबोधतः ॥
द्वैतनास्तित्वबोधःस्यादन्यथादृढतामियात् ॥ ३० ॥ दुर्घटंकृतकृत्य

त्वंद्वैताशिक्षितचेतसः ॥ अद्वैतशिक्षितस्यैतत्सुघटंतृप्तिहेतुकं ।
॥ ३१ ॥ द्वैतसत्यत्वबुद्धिस्तुभवार्णवइतीर्यते ॥ तस्यसंतरणो
पायोब्रह्मैकत्वविनिश्चयः ॥ ३२ ॥ येचैवसात्विकाभावाराज
सास्तामसाश्चये ॥ मत्तएवेतितान्विद्धिनत्वहंतेषुतेमयि ॥ ३३ ॥
मत्तएवेत्यन्यहेतून्निषिध्यप्राहकेशवः ॥ मिथ्यात्वमपिविश्वस्यमि
थःसंबंधवर्जनात् ॥ ३४ ॥ यदिसत्यंभवेद्विश्वंकुतोनभवितान
योः ॥ संबंधोतोमृषाविश्वमितिचेश्वरदर्शनं ॥ ३५ ॥ इदंपरंपरा
लब्धंकल्पितानीतराणितु ॥ दर्शनानिविचित्राणिकपिलादिमुनी
श्वरैः ॥ ३६ ॥ क्रमेणतान्यपिपरश्रेयोहेतवएवहि ॥ यावत्तद्दर्श
नश्रद्धातावदात्मापिवंचितः ॥ ३७ ॥ अतएवहरिःप्राहयोयच्छ्रद्धः

सएवसः ॥ यत्फलंगुरुणालभ्यंतदाप्नोतिपरंपरा ॥ ३८ ॥ अत
श्चाद्वयनिष्ठायांतिष्ठमाच्छिक्षणात्स्थिरं ॥ अनुभूतिविवादस्तुनका
र्योद्दृष्टितंत्रितैः ॥ ३९ ॥ तस्माद्विलोकयसदाब्रह्ममात्रंजगच्छि
शो ॥ ब्रह्मीभवासिविश्वंचब्रम्हीभवतिसंप्रति ॥ ४० ॥ सत्यमुक्तं
त्वयानाथयथापश्यंतथाजगत् ॥अभादिदानींब्रम्हैवजगदित्यभिधी
यते ॥ ४१ ॥ व्युत्थानंवासमाधिंवानजानेस्वगतौहितौ ॥ अद्वि
तीयंब्रम्हतत्वंकचत्यात्मनिकेवलं ॥ ४२ ॥ इतिश्रीकैवल्यगाथायां
उपदिष्टदृष्टिस्थिरीकरणंनामद्वादशोऽध्यायः ॥ जयसच्चिदानंद ॥
॥ जयसच्चिदानंद ॥ पुनर्विश्वचमत्कारंशृणुश्रवणभूषणं ॥ यच्छ्रु
त्वानंदसिंधौत्वंनिमज्जासिपदेपदे ॥ १ ॥ पृथ्वीज्योतिःस्थूलतरंवा

रिज्योतिस्ततःपरं ॥ तेजोज्योतिस्ततःसूक्ष्मंवायुज्योतिस्ततोप्य
णु ॥ २ ॥ व्योमज्योतिस्ततःसूक्ष्मंशब्दज्योतिस्ततःपरं ॥ ततः
सूक्ष्मतमंब्रम्हज्योतिरग्रेनकिंचन ॥ ३ ॥ यन्नकिंचनतद्ब्रम्हज्यो
तिरुक्तंमनीषिभिः ॥ तदेवशब्दज्योतिश्चमायाज्योतिरितीरितं ॥
॥ ४ ॥ व्योमज्योतिस्तदेवोक्तंवायुज्योतिस्तदेवहि ॥ तदेवतेजो
ज्योतिश्चजलज्योतिस्तदेवहि ॥ ५ ॥ पृथ्वीज्योतिस्तदेवोक्तंपूर्व
मुत्तरशब्दभाक् ॥ अकिंचनज्योतिषीदंज्योतिःकिंचनकल्पितं ॥
॥ ६ ॥ अकिंचनत्वमत्यत्क्वाभातिपश्यसकौतुकं ॥ क्वकिंचनज्यो
तिरास्तेघटज्योतिःक्ववामृदि ॥ ७ ॥ मृज्ज्योतिरेकंभासेतयथा
संकल्पमीक्षते ॥ तत्संकल्पपरित्यागेमृज्ज्योतिःशिष्यतेपरं ॥८॥

तथासंकल्पितंज्योतिर्निःसंकल्पेविलीयते ॥ निःसंकल्पदशायां यच्छिष्टंतद्युज्यतेकथं ॥ ९ ॥ वक्तुंश्रोतुंचमंतुंचध्यातुंवाबुद्धिपारगैः ॥ सदापश्यंतिकवयस्ताद्विष्णोःपरमंपदं ॥१०॥ अकिंचनपरंज्योतिर्भातिविश्वात्मनास्वयं ॥ स्वातिरिक्तमदृष्ट्वैवस्वयमात्मनिशाम्यति ॥ ११ ॥ रसज्योतिर्गुहायांतुपृथ्वीज्योतिःप्रदीपितं ॥ तेजोज्योतिर्गुहायांतुजलज्योतिःप्रदीपितं ॥ १२ ॥ वायुज्योतिर्गुहायांतुतेजोज्योतिःप्रदीपितं ॥ व्योमज्योतिर्गुहायांतुवायुज्योतिःप्रदीपितं ॥१३॥ शब्दज्योतिर्गुहायांतुव्योमज्योतिःप्रदीपितं॥ ब्रम्हज्योतिर्गुहायांतुशब्दज्योतिःप्रदीपितं ॥१४॥ अकिंचनगुहायांतुब्रम्हज्योतिःप्रदीपितं ॥ अकिंचनगुहाशून्यास्वप्रकाशैकपूरिता ॥

यद्गुहासंप्रनिष्टेननकिंचिदृश्यतेजगत् ॥ १५ ॥ सर्वास्त्वपिगुहास्वे
षास्थिताऽकिंचनसद्गुहा ॥ केनापिदैवयोगेनदृश्यतेयत्रसागुहा
॥ १६ ॥ यस्यांसुप्तामहासिद्धादत्ताद्याःसनकादयः ॥ तत्रस्वापि
हिगाढंत्वांसेवंतेसर्वसिद्धयः ॥ १७ ॥ अगस्तिर्माधवश्चैवमुचुकुं
दोमहामुनिः ॥ आस्तिकःकपिलश्चैतेयत्रसुप्ताःसुखेनहि ॥१८॥
नयत्रास्तिदिवारात्रिर्यत्रसूर्योस्तमेतिच ॥ विभांतिशतशःसूर्यानै
कोयत्रविभासते ॥ १९ ॥ अप्येषाशीतलतमासर्वजाड्यंविनाश
येत् ॥ अपिसूर्यशतक्रांतासर्वतापंनिवारयेत् ॥ २० ॥ नैकोपिय
त्रतत्रैवभासतेसकलंजगत् ॥ यत्रनावांतत्रचावांवदावोपिपरस्परं
॥ २१ ॥ दिवांधायोगिनोयत्रनिमील्याक्षीणिशेरते ॥ उन्मील्या

कै. क्षीणिपश्यंतोदृश्यादेवहिबिभ्यति ॥ २२॥ चक्षुष्मंतोनपश्यंतिप गा.
श्यत्यंधाजगत्प्रथां ॥ गुहायांसंप्रविष्टायेनावर्तंतेपुनर्जनाः ॥२३ ॥
६९ अतिदूरेगुहासातुयावन्नोमार्गदर्शकः ॥ मार्गदर्शकलाभेतुसूपविष्टे
नलभ्यते ॥ २४ ॥ ज्योतिर्मयीगुहासातुनदृष्टाकैरपिक्वचित् ॥
गुरुदत्तांजनालिप्तचक्षुषादृश्यतेसकृत् ॥ २५ ॥ दृष्टंज्योतिर्मयं
विश्वंदृष्टंज्योतिर्नकिंचन ॥ दृष्टाज्योतिर्मयीकापिगुहात्वद्वचसागु
रो ॥ २६ ॥ नमस्तेचित्रवचसेनमःकारुण्यमूर्तये ॥ यद्वाङ्नदी
वहद्विश्वंसुखरूपेणतिष्ठति ॥ २७ ॥ यद्वाग्धुनीजलंपीत्वापामरो
प्यमरोभवेत् ॥ अकिंचनगुहाशाभिबोधकुध्रनमोस्तुते ॥ २७ ॥
सर्वज्योतिषियत्रैकीभवंतिगुरुनामनि ॥ नाकिंचिज्ज्योतिषेतस्मैवा ६९

गतीतायतेनमः ॥ २८ ॥ वाचस्त्वदुक्ताःसंश्रुत्यच्चमत्कारार्थगर्भि
ताः ॥ अपारानंदसिंधौतुमग्नोनुद्विग्नमानसः ॥ २९ ॥ इतिश्री
कैवल्यगाथायांज्योतिस्तत्वनिरूपणंनामत्रयोदशोध्यायः ॥ जयस
च्चिदानंद॥श्री॥शृणुवत्सतमोगाथांहृत्तमोनाशिनींपरां॥यांश्रुत्वाल
भतेतेजस्तेजःशद्वासहंपरं॥१॥पृथ्वीतमोजलतमस्यस्तमेतिनिरी
क्षय॥जलतेजोप्यस्तमेतितेजस्तमसिनित्यशः ॥२॥ तेजस्तमोप्य
स्तमेतिवायुनामतमस्यपि ॥ वायुनामतमोप्येतिवियत्तमासिचा
स्ततां ॥ ३ ॥ वियत्तमोप्यस्तमेतिशब्दसंतमसेपिच ॥ शब्दसं
तमसंयातिस्वप्रकाशतमस्यपि ॥ ४ ॥ यद्यस्याच्छादनंतत्तुतम
इत्यभिधीयते ॥ कार्याच्छादनकारीणिकारणानितमोनाकिं ॥५॥

कारणाच्छादनंकार्यमपितत्तमइष्यते ॥ सर्वाण्यपिचवस्तूनितम
एवनसंशयः ॥ ६ ॥ पश्यसूर्यादिज्योतींषितमआच्छादकानि
हि ॥ अतस्तदृष्टंयतरायेतमएवहिदृश्यते ॥ ७ ॥ नसूर्यज्योति
षानष्टंपुनर्दर्शनमास्तियत् ॥ बहिर्देशानोपयातिमध्येनाशप्रसंगतः
॥ ८ ॥ नतत्रोत्पादिकाकाचित्साम्रग्रीदृश्यतेक्वचित् ॥ नाभावो
भावरूपस्यनीलस्यतमसोभवेत् ॥ ९ ॥ तस्मात्सूर्यादितेजांसि
तमः कार्याणिमन्महे ॥ अतः स्वकारणतमोवृतान्येवभ्रमंतिहि
॥ १० ॥ यथापृथ्व्यादिभूतानिस्वकारणवृतानिच ॥ लीयंतेपि
चतत्रैवस्वोपादानेदिनेदिने ॥ ११ ॥ यथानिर्वाणमायातोदीपस्त
मसिलीयते ॥ तथानिर्वाणमायाताः सूर्याद्याअपिकालतः ॥

॥ १२ ॥ यद्यत्रलीयतेवस्तुतत्तत्कार्यंविनिश्चितं ॥ कार्यंदृष्टौनिरु
द्धायांकारणस्यैवदर्शनं ॥ १३॥ वोयोस्तेजः समुद्भूतिः श्रुत्याय
द्यपिदर्शितं ॥ तथापितस्यतात्पर्यमानंतर्येसुनिश्चितं ॥ १४ ॥
तमः सर्वाणिकार्याणिस्वेतरावृतिदर्शनात् ॥ अतएवविचार्याह
तमआसीदितिश्रुतिः ॥ १५ ॥ युक्तंतज्ज्योतिषांनाशेतमोन्य
त्प्रलयेकिमु ॥ अतस्तत्कार्यवर्गोयमाच्छादयतिकिंचन ॥ १६ ॥
दिवांधानांतमोज्योतीरात्र्यंधानांतमस्तमः ॥ दृष्टिरूढमिदंमन्ये
यत्तमोनामलौकिकं ॥ १७ ॥ अन्यस्यस्थगितंदृष्टौपश्यत्य
न्योपितत्क्षणे ॥ तस्मात्तमोनैकमस्तिदृष्टिभेदेव्यवस्थिते ॥१८॥
यद्दृष्टावंजनंश्रीमद्देशिकेनसमर्पितं ॥ तत्तमोलीयतेक्वापिपश्ये

त्स्वंतमसः परं ॥ १९ ॥ अतोंधकारेसुघनेसर्वाच्छादनतत्परे ॥
अपिवेत्तिनिजंवस्तुनावृतस्तमसाक्वचित् ॥ २० ॥ तदेवैकंपरंज्यो
तिरनुच्छिन्नमनंतकं ॥ तद्भासैवतमोमूलंभासतेसकलंजगत्
॥ २१ ॥ तदाश्रयंतमोनूनंतदनाच्छादनंतथा ॥ अपिदेशिक
शब्देनज्योतिषैवापसार्यते ॥ २२ ॥ किमस्तितमसाग्रस्तांकित्व
यात्रानुभूयते ॥ तद्विचार्यवदाशुत्वंप्रमादोनयथाभवेत् ॥ २३ ॥
अस्त्यंधकारस्तस्यैवजठरेसर्वमस्तिहि ॥ अप्रवृत्तेंद्रियव्रातोनुभ
वाम्येकमेवहिं ॥ २४ ॥ अस्त्यंधकारोज्ञानंवातमसोज्ञानमस्ति
हि ॥ तर्ह्यस्तित्वंज्ञानगतंनतमःस्थंप्रभाषसे ॥ २५ ॥ ज्ञानम
स्तितमोनास्तिसिद्धंत्वद्वचसैवहि ॥ तर्हियत्तमसाग्रस्तंतन्नास्ति

त्वंचसांप्रतं ॥ २६ ॥ जलपूर्णघटाभावेजलाभावोपिसुस्थिरः ॥
तद्वत्संतमसाभावेविश्वंनास्तीतिसांप्रतं ॥ २७ ॥ अस्तिविश्वंत
मोग्रस्तमितिचेदुच्यतेत्वया ॥ अनुभूयाथसंस्मृत्यवदस्येतद्वदा
शुनः ॥ २८ ॥ सामग्र्यभावादनुभूर्नैवयुज्येतसातदा ॥ तदाप्य
नुभवश्चेत्स्यात्कोविशेषोस्तितेजसि ॥ २९ ॥ स्मृत्वाचेत्स्मृतिरा
स्तेवास्मृतेरनुभवोस्तिहि ॥ अनुभूयस्मृतिंवच्मितर्ह्यास्तेनुभवः
स्मृतेः ॥ ३० ॥ स्मृतिर्नास्तीतिसिद्धंतेतर्ह्यास्तेकिंचतच्छृणु ॥
येनत्वंजगतःसत्तांहित्वास्वस्थोभविष्यसि ॥३१॥ यत्रयश्चगुणो
नास्तिसतमिच्छेत्परस्यहि ॥ यथाजलमुशीरस्यगंधंकामयतेऽनि
शं ॥ ३२ ॥ तथादृश्यंबोधसत्तांकांक्षमाणंकथंनुसत् ॥ यथाबोध

प्रकाशंचप्रकाःशस्यात्कथंजगत् ॥ ३३ ॥ असतश्चाप्रकाशस्यनिर
स्तासुखरूपता॥तस्माद्विश्वग्रासकारिस्वात्मरूपंमहातमः ॥३४॥
तमोपिलीयतेयत्राविश्वेनसहसर्वतः ॥ तमोपिभासतेयेनविश्वेन
सहसर्वतः ॥३५॥ तदेकंपरमंतत्वंश्रुतिगम्यमलौकिकं ॥ आदि
त्यवर्णंतमसः परस्तादितिचश्रुतिः ॥ ३६ ॥ यस्मिन्दृष्टेजगद्वा
र्ताशशश्रृंगायतेअहो ॥ अदृष्टेतुवलाढ्यासातस्मैचित्तमसेनमः ॥
॥ ३७ ॥ अस्मिंस्तमसिखेलंतिलीलयैवमहाजनाः ॥ जगद्वार्ता
यत्रकापिनदृष्टानश्रुतिंगता ॥ ३८ ॥ तस्मिंस्तमसिखेलंतिबोध्य
वार्तैवयत्राहि ॥ पामराबोधवार्तायांदूरदूरचरानराः ॥ ३९ ॥ का
कोलूकनिशायद्वन्मिथोनश्रुतिगोचरा ॥ अनात्मज्ञात्मज्ञनिशामि

थोनश्रुतिगोचरा ॥ ४० ॥ यानिशासर्वभूतानांतस्यांजागर्तिसंय
मी ॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः ॥४१॥ सत्यंतमो
मयंसर्वमनुभूतमिदंजगत् ॥ तस्यग्रासकरंबोधतमोप्यद्वयनामकं
॥ ४२ ॥ यथावदासिहेनाथतथाभातिजगन्मम ॥ तस्मैविचित्रव
चसेनमस्कुर्मोयथाबलं ॥ ४३ ॥ इतिश्रीकैवल्यगाथायांतमोपस
रणंनामचतुर्दशोध्यायः ॥ श्री ॥ नीतिज्ञोपिचधर्मज्ञस्तत्वज्ञइति
पूरुषाः ॥ त्रयएवहिविख्याताजगज्जीवनहेतवः ॥ १ ॥ नीतिज्ञः
संश्चधर्मज्ञस्तत्वज्ञइतिपूरुषौ ॥ द्वावेवेतिपरेप्राहुर्याभ्यांविश्वंचजी
वति ॥ २ ॥ तत्वज्ञोपिचधर्मज्ञोनीतिज्ञइतिपूरुषौ ॥ द्वावे० ॥ ३ ॥
तत्वज्ञोपिचनीतिज्ञोधर्मज्ञइतिपूरुषौ ॥ द्वावे० ॥ ४ ॥ तत्वज्ञोपि

कै. चधर्मज्ञोनीतिज्ञइतिपूरुषः ॥ एकएवेतिचपरेयेनविश्वंचजीवति गा.
॥ ५ ॥ ईदृशःपुरुषोलोकेकोभवेदीशमंतरा ॥ यदिदृष्टःकोपिलो
७३ केतमीशंमन्यतेजनः॥ ६॥ किमुवक्तव्यमहहयत्रैकोपिगुणोवरः॥
ईशत्वायभवेल्लोकेयत्रास्तेतत्त्रयंक्वचित् ॥ ७ ॥ यथाश्रीशंकरा
चार्यागुणत्रयविभूषिताः ॥ आचार्यपदवीरूढाजगतोगुरुतांययुः
॥८॥ तथैवरामकृष्णाद्यावसिष्ठाद्याश्चपूरुषाः॥ईशकोटिषुगण्यंते
ज्ञानेनैवबलेनते॥९॥पृथक्पृथक्प्रदृश्यंतेगुणाएतेक्वचित्क्वचि
त्॥तेपिपूज्यतमालोकेयुधिष्ठिरनलादयः॥१०॥ जनकाद्याश्चदत्ता
द्यापृथ्वाद्याअपिकेचन॥ द्वाभ्यामेकेनवालौकेलोकोत्तरतयामताः
॥ ११ ॥ गुणप्रधानभावेनवर्ततेसर्वएवहि ॥ उदाहृतेषुचान्येषुन ७३

चेत्पुजात्कथंभवेत् ॥ १२ ॥ लोकार्थीनीतिमादत्तेसुखार्थीधर्मम्मं
जसा ॥ मोक्षार्थीज्ञानमेवैकंछिद्यतेयेनवासना ॥ १३ ॥ नीतिधर्मं
चजानातितज्ज्ञंसंमनुतेपिच ॥ परंतुबंधरूपत्वान्नाचरत्येववक्तय
पि ॥१४॥ अतएवहिवृद्धानांवचनंश्रूयतेबहु ॥ उत्तमानांवचःसत्यं
चरित्रंतुकर्ह्यचित्क्वचित् ॥ १५ ॥ नीत्याधर्मेणवर्धंतेतानूनंलोकवा
सनाः ॥ तत्वज्ञानेनछिद्यंतेइत्येकेपिजनामताः ॥ १६ ॥ आचा
र्यकोटावेतेतुगण्यंतेबहुदर्शिभिः ॥ पालितालोकमर्यादाजनैरेताह
शैरिह ॥ १७ ॥ कैश्चित्किमस्तिलोकेनतयामर्यादयाकिमु ॥
इतिसंरक्षिताब्रम्हनिष्टैवयथारुचि ॥ १८ ॥ अवधूतेषुगण्यंतेई
दृशास्तत्वदर्शिभिः ॥ एतेभ्यःशिक्षितंज्ञानंवलवद्भवनाशने ॥१९॥

शिवोदत्तश्चऋषभोभरतोथशुकोमुनिः ॥ इत्याद्यासिद्धगुरवःस
द्योमोक्षैकहेतवः ॥ २० ॥ अवधूतोगुरुःक्वापिकेनचिल्लभ्यते
भुवि ॥ लब्धेपितत्रश्रद्धातुसहसानैवजायते ॥ २१ ॥ यतोमूर्ख
जनोज्ञानिन्यपिधर्मंसमीक्षते ॥ सर्वोत्तीर्णैस्वचेष्टधर्मलाभोदुःशक
एवहि ॥ २२ ॥ अतस्तस्मान्निवर्त्ततेसिंहात्त्रस्तागजायथा ॥
तआचार्येषुसंतुष्टाधर्ममिश्रोपदेशिषु ॥ २३ ॥ जगद्यद्यपिमिथ्यै
वतथापितवसुव्रत ॥ धर्मोल्लंघोनचश्लाघ्योयेननानिंदाभवेत्तव ॥
॥ २४ ॥ ज्ञानीभूत्वापिनिंदायाःपात्रंकस्माद्भविष्यसि ॥ अतएव
हरिःप्राहपृच्छतेपंडुसूनवे ॥ २५ ॥ कर्मणैवहिसंसिद्धिमास्थिता
जनकादयः ॥ लोकसंग्रहमेवापिसंपश्यन्कर्तुमर्हसि ॥ २६ ॥

एवंमिश्रोपदेशेनमुच्यंतेदीर्घकालतः ॥ सगुणेनिर्गुणेचापियेषां
निष्ठासमामता ॥ २७ ॥ शुद्धनैर्गुण्यनिष्ठैवकैवल्यपदभाजनं ॥
इत्याहुरवधूतास्तेधर्मनीत्युभयातिगाः ॥ २८ ॥ मृद्दंभःकलशोय
द्वद्ब्रह्मदंभोजगत्तथा ॥ दंभेपिचेत्तवश्रद्धाकदामुक्तोभविष्यसि ॥
॥ २९ ॥ नेतिज्ञातेपिचेच्छ्रद्धाश्रद्धादंभोयमिष्यते ॥ तत्वज्ञान्यपि
दंभीतिनिंदेयंतावकीनकिं ॥ ३० ॥ अदंभात्मानमाश्रित्यलभ
स्वादंभमेवहि ॥ आनंदंतेनतेहानिःकदापिनभविष्यति ॥ ३१ ॥
लोकशास्त्रैकतंत्रस्यज्ञानंतुशिथिलंभवेत् ॥ ज्ञानैकनिष्ठातंत्रस्य
लोकःशास्त्रंचतत्तथा ॥ ३२ ॥ यथायथाज्ञाननिष्ठाविवृद्धातेभावि
ष्यति ॥ तथातथालोकशास्त्रवासनाशिथिलाभवेत् ॥ ३३ ॥

असौविशुद्धइत्युक्तःपक्षोविज्ञानकेवलः ॥ यत्रनैवजगद्वार्ताब्रह्म
वार्तापिकाचन ॥ ३४ ॥ उभाभ्यामपिवार्ताभ्यांमुक्तस्यदृढचे
तसः ॥ निर्बीजैकसमाधेस्तुस्थितिर्वक्तुंनशक्यते ॥ ३५ ॥
विस्मृताखिलविश्वस्यसंस्मृतामलसंविदः ॥ विज्ञानकेवलस्या
स्यदासाहरिहरादयः ॥ ३६ ॥ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शि
नं ॥ अनुव्रजाम्यहंनित्यंपूयेयेत्यंघ्रिरेणुभिः ॥ ३७ ॥ इत्याह
भगवान्साक्षादुद्धवंप्रतिकेशवः ॥ तस्माद्विज्ञाननिष्ठस्ययोगक्षेम
वहोहरिः ॥ ३८ ॥ विज्ञाननिष्ठारूपंतुहंसरूपेणपूर्वजान् ॥
सनकादीन्मुनीन्प्राहसभायांपद्मजन्मनः ॥ ३९ ॥ योजागरेवहि
रनुक्षणधर्मिणोर्थान्भुंक्तेसमस्तकरणैर्हृदितत्सदृक्षान् ॥ स्वप्नेसु

प्तउपसंहरतेसएकःस्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः ॥ ४० ॥
एताविमृश्यगुणतोमनसस्त्र्यवस्थामन्माय यामयिक्ताइतिनि
श्चितार्थाः ॥ संछिद्यहार्दमनुमानसदुक्तितीक्ष्णज्ञानासिनाभजत
माखिलसंशयाधिं ॥ ४१ ॥ एवंतारविचारेणतीर्णस्याखिलसं
सृतेः ॥ आत्मारामस्यतृप्तस्यस्थितिमाहजनार्दनः ॥ ४२ ॥
देहंचनश्वरमवस्थितमुत्थितंवासिद्धोनपश्यतियतोध्यगमत्स्वरूपं
दैवादुपेतमथदैववशादपेतंवासोयथापरिकृतंमादिरामदांधः ॥४३॥
देहोपिदैववशगःखलुकर्मयावत्सारंभकंप्रतिसमीक्षतएवसासुः ॥
तंसप्रपंचमधिरूढसमाधियोगःस्वाप्नंपुनर्नभजतेप्रतिबुद्धवस्तुः ॥
॥ ४४ ॥ एवंविस्मृतविश्वस्याविदुषःकिमपेक्षितं ॥ निरपेक्षस्य

शांतस्यदासीभूतंजगत्त्रयं ॥ ४५ ॥ अवधूतक्रमोह्येषतत्त्वज्ञा
नैकसंश्रयः ॥ निरूपितोवत्सतुभ्यंतन्निष्ठस्त्वंसखीभव ॥ ४६ ॥
ज्ञातोमयाजगद्दंभोमयिविस्मरणोत्थितः ।।सत्यसंस्मरणाच्चित्रंसुषु
प्ताविवलीयते ॥ ४७ ॥ घटदंभोयथामृत्स्नाविज्ञानेनाविलीयते॥
तथात्मज्ञानयोगेनजगद्दंभोलयंगतः ॥ ४८ ॥ स्वंविस्मरंतीमृत्स्नै
वघटइत्यभिधीयते ॥ तथास्वंविस्मरन्नात्माजगदित्यभिधीयते
॥ ४९ ॥ स्वंविस्मरज्जलंलोकेहिमइत्याभिधीयते ॥ तथास्वं०
॥ ५० ॥ स्वंसंस्मरज्जलंलोकेजलमित्यभिधीयते ॥ तथास्वसं
स्मरन्नात्माब्रह्मैवेत्युच्यतेबुधैः ॥ ५१ ॥ एतावदंतरंमन्येजगतो
ब्रह्मणोपिच ॥ यावद्दंभस्यधर्मस्यमन्यंतेलौकिकाजनाः ॥ ५२ ॥

नदंभोनिष्फलोलोकेजगद्दंभोननिष्फलः ॥ अतएवजनाःकेचिद्ध
संत्यपिरुदंत्यपि ॥ ५३ ॥ फलेषुदंभजन्येषुमूर्खाएवाधिकारिणः॥
अदंभेषुफलेष्वद्धाविवेचनपरानराः ॥ ५४ ॥ तस्माद्विवेकिजनता
नदंभंनातितत्फलं ॥ गजभुक्तकपित्थाभंनजानातिनमन्यते ॥
॥ ५५ ॥ जागर्तुंयदिजानीषेसत्येजाग्रहिनानृते ॥ स्वप्नंचेद्द्रष्टु
कामोसिपश्यावस्थात्रयंसदा ॥ ५६ ॥ यदित्वंस्वापकामोसित्वि
स्मरन्नेवतत्त्रयं ॥ स्थितोभवसिधेन्नूनंकैवल्यमवशिष्यते ॥
॥ ५७ ॥ नैतज्जाग्रन्नचस्वप्नःसंकल्पानामभावनात् ॥ सुषुप्तभा
वोनाप्येतदभावाज्जडतास्थितेः॥ ५८ ॥ नांतर्बहिर्नाधरमूर्ध्वकं
वानांतंनमध्यंनपुनस्तथादिः ॥ नैतादृशौतादृशशब्दवाच्यंकिंचि

 न्महः केवलमाद्वितीयं ॥ ५९ ॥ पीतंनरक्तंनचनीलशुभ्रं 
 यदातदानात्रचतत्रवापि॥ भोग्यंनभे क्तानचवेद्यमेतत्किंचिन्महः
केवलमद्वितीयं ॥ ६० ॥ नद्वैतमद्वैतमथापिनैवनत्वंनचा
हंनचतत्तथैव ॥ यन्नोविभास्यंनचभासकंवाकिंचि० ॥ ६१ ॥ न
ब्रम्हमायानचकारणंवानजाग्रतिःस्वप्नसुषुप्तिभावौ॥ नजीवितंनो
मरणंनचित्तंकिंचि० ॥ ६२ ॥ सदादिशब्दासहमेकशब्दासहंत
दोंकारतडित्प्रकाशं ॥ समंकथंवच्मिगिरांविदूरंकिंचि० ॥ ६३ ॥
इयंकैवल्यपदवीविश्वंविस्मरतासदा ।। जाग्रतास्वपतावापिलभ्या
ताराबलंविना ॥ ६४ ॥ कैवल्यपदवीनाथत्वद्वारदीपप्रकाशिता ॥
तदेकनिष्ठापन्नस्यक्वनीतिःक्वचधर्मः ॥ ६५ ॥ विश्ववदंभे 

सोऽपिदंभोविशेषःकोऽस्तितत्रहि ॥ दंभमात्रेपरिज्ञातेकैवल्यमव
शिष्यते ॥ ६६ ॥ यदोंनमःसिद्धमितिमनुबोध्यंमहाफलं ॥
कथंविहायजनताग्रंथचंक्रमणेरता ॥ ६७ ॥ भिन्नामेहृद
यग्रंथिश्छिन्नामेसर्वसंशयाः ॥ क्षपितान्यपिकर्माणिगुरोकैवल्य
गाथया ॥ ६८ ॥ इतिश्रीकैवल्य गाथायांज्ञानैकनिष्ठाफलनि
रूपणंनामपंचदशोऽध्यायः ॥ ॥ जय सच्चिदानंद ॥ जातकर्मकृ
तंतेद्ययज्ज्ञातस्यनरस्यच ॥ अवश्यमात्मश्रवणंयेनब्राम्हण्यमाप्य
ते ॥ १ ॥ जातकर्मविहीनस्यकुलंशीलंवपुस्तथा ॥ व्यर्थमेवेति
विद्वांसआहुस्तेतत्वदर्शिनः ॥ २ ॥ अबाधितत्वात्सन्नामबाधि
तंत्वयिवर्तते ॥ प्रकाशकत्वाच्चिन्नामबाधितंत्वयिभासते ॥ ३ ॥

सर्वस्मात्त्वंप्रियोयस्मादानंदोनामतेमतं ॥ तस्मात्त्वंसच्चिदानंदना
म्नाश्रुतिषुगीयसे ॥४॥ त्वत्सत्तयासमुद्भूतंत्वयिविश्वंविलीयते ॥
एतदन्नप्राशनंतेसदातृप्तिकरंमतं ॥ ५ ॥ दृश्यंसर्वरसोपेतमहंब्र
म्हेतिमंत्रतः ॥ भुंक्ष्वतेनबलाढ्यस्त्वंतेजस्वीचभविष्यसि ॥ ६ ॥
तीक्ष्णाग्रयातारसूच्याकर्णौविध्यामितेशिशो ॥ तेनास्तिक्यफलं
पूर्णंलभसेपूज्यसांपेच ॥ ७ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थंतत्रपु
जगुः ॥ तस्यमूलंशिरःप्रोक्तंकेशास्तस्यजटास्मृताः ॥ ८ ॥ प्रपं
चवासनास्तास्तुमूर्ध्निनृत्यंतितेशिशो ॥ छिन्नच्छिन्नेतिवाक्येनयेनो
पनयनार्हता ॥ ९ ॥ स्थापयामिशुभाःकाश्चित्ताःशिखाब्रम्हकर्म
णि ॥ अर्हतामावहंत्येवब्रम्हयज्ञोयतोभवेत् ॥ १० ॥ द्वाभ्यांतुन

यनाभ्यांत्वंयत्पश्यसिजगन्मुहुः ॥ विचारनयनेनत्वंपश्यब्रम्हमयं
जगत् ॥ ११ ॥ कामजन्यंजगत्सर्वंकामइत्यभिधीयते ॥ शीघ्रं
जुहुधिमद्दत्तेतृतीयनयनेशिव ॥ १२ ॥ शिवत्वंज्ञायसेनूनंयत्स्तौति
सकलाश्रुतिः ॥ येनत्वामभिकांक्षेतनित्यंरंतुमुमासती ॥ १३ ॥
अनादिबोधगिरिजाब्रह्मविद्येतियांविदुः ॥ तयासहविवाहंतेकरो
म्यवहितोभव ॥ १४ ॥ भवत्वंसावधानेनमनसानान्यगामिना ॥
अंतःपटापसारस्यसमयोयंसमागतः ॥ १५ ॥ परोक्षंयद्विजानी
षेजगन्मूलंसदद्वयं ॥ तत्वमेवत्र्यवस्थानामाधारःपरमंपदं ॥१६॥
त्र्यवस्थामात्रकंविश्वंतवविस्मृतिसंभवं ॥ स्मरात्मानंशिवोस्मी
तिसद्योविस्मरसित्रयं ॥ १७ ॥ वाङ्मात्रंसत्यरूपस्त्वंत्वदात्मक

मिदंजगत् ॥ नेक्षणंनापिभूतानिनजन्मनम्रृतिस्तथा ॥ १८ ॥
क्वांतःपटोऽखंडरसेतवाविस्मृतिमंतरा ॥ अपसारितएवासौसं
स्मृत्याब्रह्मविद्यया ॥ १९ ॥ तयासहसुखंभुंक्ष्वजीवन्मुक्तिंसुशो
भनां ॥ शिवभोग्यांशिवस्त्वंतुगार्हस्थ्यंतवशोभते॥२०॥ वसब्रह्म
वनेनित्यंभीतिंमुत्क्वाद्वयात्थितां ॥ अद्वैतबोधखड्गेनकामादिश्वा
पदान्जहि ॥ २१ ॥ असुंचतोब्रह्मविद्यांभार्यांसुरतरंगिणीं ॥
वनवासोपिसुखदोभुक्तयेपिचमुक्तये ॥ २२ ॥ तत्रब्रह्मवनेकोचि
दागच्छंतिमुमुक्षवः ॥ श्रद्धयादेहितेभ्योपिज्ञानंज्ञैयैकभोजनं ॥
॥ २३ ॥ अतिथीनांचसत्कारेयशोधर्मश्चतेभवेत् ॥ गायंतिस
त्कृतानूनंतवस्वाश्रमसंस्थितिं ॥ २४ ॥ अस्मिन्ब्रम्हवनेनित्यं

नरसिंहाश्चरंतिहि ॥ येभ्योबिभेतिसकलंविश्वंदृष्टिपथंगतं ॥२५॥
यत्सत्तामपहृत्यैतेस्वसत्ताख्यापनेरताः ॥ सहस्त्रंमिलिताएतेएक
मेवभवंतिहि ॥ २६ ॥ यन्मात्रामाययायत्तुकृतमेकंसहस्त्रधा ॥
तेनक्रुद्धाइमेमायांनिर्मूलीकरणोद्यताः ॥ २७ ॥ तेभ्योभीतामि
दंविश्वंमात्रासहपलायते ॥ तेषांपादयुगानित्यंकायाघवइवाश्र
य ॥ २८ ॥ बहवोदारितायैस्तुकामाद्यादानवाःशठाः ॥ तत्संगमे
नतेगेहेनतिष्ठंत्येवदानवाः ॥ २९ ॥ अस्मिन्ब्रह्मवनेसर्वेतरवोब्र
ह्मनामकाः ॥ स्वप्रकाशाएकरसाअपिनानेवभांतिहि ॥ २९ ॥
प्रतिवृक्षंसृष्टिचित्रंविचित्रंदृश्यतेस्वयं ॥ अंधाएवहिपश्यंतिनो
न्मीलितविलोचनाः ॥ ३० ॥ बहवोत्रब्रम्हवनेनीरोगाअपिरोगि

णः ॥ भिषजोपिचकेचित्तुभाषयित्वागदानुदः ॥ ३१ ॥ स्वफलं
स्वयमेवात्रभुंजतेतरवोमुदा ॥ स्वफलंस्वयमेवेतिनजानात्येवक
श्चन ॥ ३२ ॥ विज्ञायेतयदैकत्वंभोक्तुर्भोग्यफलस्यच ॥ तदा
भोगाः क्षयंयाताभोगेपापाअपिक्षताः ॥ ३३ ॥ अत्रब्रम्हवनेकृ
ष्णनामावृक्षः कदाचन ॥ संप्ररोहतितंदृष्ट्वानृत्यंत्येतेमयूरवत् ॥
॥ ३४ ॥ दुर्वासानारदोव्यासशुकगर्गपराशराः ॥ इत्याद्यावर्हि
णोप्यत्रकेकांकुर्वंतिसादरं ॥ ३५ ॥ गायंतःकृष्णसत्कीर्तिंशृ
ण्वंतोवासुधाधिकां ॥ केकागेहकलत्रादितुच्छबुध्यात्यजंतिन
॥ ३६ ॥ काश्चिल्लताःकृष्णवृक्षंश्लिष्यंतिस्वरसादिह ॥ काश्चि
त्तन्मयतांयाताः काश्चिद्यास्यंतिचापराः ॥ ३७ ॥ स्वगोर

संचार्पयंत्योगायंत्योनामसुंदरं ॥ समाधिस्थाइवाभांतिकृष्णेत्रै
लोक्यसुंदरे ॥ ३८ ॥ गुरुप्रसादसंलब्धमोक्षद्राक्षांस्वचंचुतः ॥
मुमुक्षंतिशुकाःकेचिद्धंसाअपिचमुक्तिकां ॥ ३९ ॥ स्वतोब्रह्मवनं
रम्यंकृष्णवृक्षोस्यभूषणं ॥ वसात्रैवनिजंधर्मंपालयन्निरपेक्षकः ॥
॥ ४० ॥ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शिनं ॥ अनुव्रजत्ययंनित्यं
पूयेयेत्यंघ्रिरेणुभिः ॥ ४१ ॥ यद्याश्रमेस्मिन्संत्रस्तोन्यस्यावस्था
त्रयंस्वयं ॥ नित्यजाग्रन्निजानंदेनिःसंदेहंचजागृहि ॥ ४२ ॥
बोधाग्निनावनंसर्वंमायामयमसुंदरं ॥ भस्मीकृत्यांगरागंत्वंकृत्वा
स्वपिहिकुत्रचित् ॥ ४३ ॥ नसन्याससमोधर्मोनतारसदृशो
मनुः ॥ ननैश्चिंत्यसमंसौख्यंनत्यागसदृशंयशः ॥ ४४ ॥

ब्राह्मसंस्कारयुक्तस्यसुखंसर्वाश्रमेष्वपि ॥ अतःकुत्राप्याश्रमेत्वं
सुखमाप्स्यसिपुत्रक ॥ ४५ ॥ कृतास्तेब्रह्मसंस्कारादुर्लभाये
नृणामिह ॥ अत्यजन्ब्रह्मविद्यांतांयत्रकुत्रापिसंचर ॥ ४६ ॥
किंमातेतिब्रवाणित्वांकिंपितेतिब्रवाणिहि ॥ किमीशंदर्शिकेंद्रत्वां
दर्शिताकरुणात्वया ॥ ४७ ॥ किंस्तवीमिगुरोत्वांतुसर्वज्ञंकरुणा
करं ॥ सत्यंसत्यंवदाम्येतत्साधवोदीनवत्सलाः ॥ ४८ ॥ भक्तवत्स
लईशस्तुपितरौपुत्रवत्सलौ ॥ स्वानुभूत्यावदाम्येतत्साधवोदीन
वत्सलाः ॥ ४९ ॥ सर्वेपिबंधवोयेषांसर्वेपिपितरौतथा ॥
सर्वेपिपुत्रवद्येषांसाधवोदीनवत्सलाः ॥ ५० ॥ सर्वेपिस्वा
त्मवद्येषांसर्वेपितृणवज्जनाः ॥ सत्पात्राणिचसर्वेपिसाधवोदीनव

त्सलाः ॥ ५१ ॥ जननीशिक्षयेच्छीलंपिताविद्यांचशिक्षयेत् ॥
ब्रम्हाशिक्षणकर्तारः साधवोदीनवत्सलाः ॥ ५२ ॥ क्वाहंमंदःक्व
संस्काराःसद्योब्रह्मैकसूचकाः ॥ शठोब्रह्मकृतस्तस्मात्साधवोदीन
वत्सलाः ॥ ५३ ॥ श्रीमंतस्तुतएवेहयद्गेहगमनक्षणे ॥ भवंति
तृप्ताःसर्वेपिसाधवोदीनवत्सलाः ॥ ५४ ॥ यत्कटाक्षेमोक्षल
क्ष्मीःसदानृत्यतिहृष्यति ॥ यएतस्यकटाक्षस्यविषयः सममेति
च ॥ ५५ ॥ स्वभावोदारतायेषांतृप्तिर्येषांस्वभावतः ॥ स्वभा
वतोविवेकाढ्यास्तेभ्यःसद्भ्योनमोनमः ॥ ५६ ॥ अमृतस्वादधि
क्कारकारिण्यःशीतलाःशुभाः ॥ वाचःसाधुषुसंदृष्टायासुब्रह्मरसः
शुभः ॥ ५७ ॥ धन्योसिभगवन्नाथत्वत्कृतब्रम्हसंस्क्रिया ॥

एकैकापिब्रूम्हभावसमर्थाःसकलाःकिमु ॥ ५८ ॥ तृप्तोस्मित
वतावाचःसंस्मरन्ब्रूम्हसद्वने ॥ संचरामिब्रूम्हविद्यानुकूलास्तु
सदामम ॥ ५९ ॥ तारंसंस्मरतोनित्यंब्रूम्हविद्यासदानुगा ॥
अतस्तारंसमाश्रित्यत्तरसंसारवारिधिं॥ ६०॥सदैवाहंब्रम्हचारीस
दैवाहंगृहाश्रमी॥ वनवासीसदैवास्मीसन्यासीचत्वदाश्रयात्॥६१॥
सदास्म्यहंब्रम्हशुद्धंनिर्विकल्पंनिरंजनं ॥ यत्कल्पयसितच्चाहंभा
मिस्वंरूपमत्यजन् ॥ ६२ ॥ प्रणवाराधनासक्तोब्रम्हचार्यस्मिसु
व्रतः ॥ ब्रम्हविद्यालिंगितत्वाद्गृहारामोस्मिनिर्भयः ॥ ६३ ॥
सर्वंब्रह्ममयंपश्यन्ब्रह्मारण्यसुखाश्रमः ॥ किंचिन्मदन्यन्नास्तीति
संन्यस्ताखिलकर्मकः ॥ ६४ ॥ सन्यस्ताखिलसंभोगः सन्यस्ता

खिलसंगमः ॥ सन्यस्ताखिलदृश्यश्रीः संछिन्नाखिलबंधनः ॥
॥ ६५ ॥ संप्राप्ताखिलसौभाग्योज्येष्ठालक्ष्मीसमुज्झितः ॥ क
निष्टयाब्रह्मविद्याभार्ययासंव्रतोयदा॥तदादारिद्र्यमखिलंक्षीणंतत्पा
दसद्गुणात् ॥ ६६ ॥ सर्वंममतुसौभाग्यंश्रीगुरोत्वत्पदांबुजं ॥ ये
नदारिद्र्यमखिलंदौर्गंध्यमिवदारितं ॥ ६७ ॥ आत्ममौर्ख्यंजग
न्मन्यंकैवल्यंममजागृतिः॥सायेनदत्तागुरुणाकरुणाब्धिःसमेगुरुः।
॥ ६८ ॥ आत्मक्रीडांजगन्मन्येतत्त्यागोममजागृतिः ॥ तत्कैवल्य
महारत्नंकरुणाब्धौतुमेगुरौ ॥ ६९ ॥ मज्जन्श्रीगुरुपादाब्जमकरं
दमहोदधौ ॥ तत्कैवल्यकलाचंद्रचूडामंडितमस्तकः ॥ ७० ॥
जिघ्रन्श्रीगुरुपादाब्जसमर्पितसुमोद्भवं ॥ साक्षात्करोमिकैवल्यं

कल्पनातीतसत्पदं ॥ ७१ ॥ वाचिनेत्रेपदेहस्तेचित्तेचित्राविचेष्टि
ते ॥ कैवल्यंकरुणाचेतिरत्नयुग्मंप्रनृत्यति ॥ ७२ ॥ कैवल्यमेव
यत्ध्यानंस्वैक्यमेवहिपूजनं ॥ फलंमनोन्मनावस्थातंत्वादेशिकसं
श्रये ॥ ७३ ॥ अहोकिमिदमाश्चर्यंशब्दमात्रमिदंजगत् ॥ हर्षशो
कौजनयतिमहतामपिसद्गुरो ॥ ७४ ॥ हर्षशोकौशब्दमात्रंनाकिं
वदाविचारय ॥ कुतोमोहःसमायातोहर्षःशोकोनिरीक्ष्यते ॥ ७५॥
सत्वधर्मोहर्षनामाशोकोपिचरजः सखा ॥ तमोधर्मइमौसत्यावि
तिबुद्धिः स्वविस्मृतिः ॥ ७६ ॥ तारंस्मरसखेशीघ्रंपलायंतेगुणा
स्त्रयः ॥ उन्मील्यनयनेपश्यक्वजगत्क्वचमुत्क्वसः ॥ ७७ ॥ मात्रा
त्रयेणगलितास्त्रयोपिचगुणाणवः ॥ अमात्रंशिष्यतेकिंचित्क्व०

॥ ७८ ॥ त्रीणिरूपाणितेवत्सजाग्रत्स्वप्नसुषुप्तिषु ॥ मात्रामुखैर
त्तितारः कवजगत्कव० ॥७१ ॥ यावत्तेत्रीणिरूपाणिनतारोग्रसति
स्त्वयं ॥ तावन्मोक्षकथांवत्समाकार्षीर्यत्रकुत्रचित् ॥ ८० ॥ यदा
त्वमशरीरत्वंस्वस्मिन्ननुभविष्यसि ॥ तदातारप्रसादस्तेजातःकै
वल्यरूपधृक् ॥ ८१ ॥ इदंतारोपासनायास्तद्विचारस्यवाफलं
॥ शमादिसंपद्विभ्राजदंतरेणहिलभ्यते ॥ ८२ ॥ शमादिसाधनै
र्हीनोयदिकैवल्यभाजनं ॥ कैवल्यस्यचशाकस्यब्रूहिरेकियदंतरं
॥ ८३ ॥ येशमादिगजारूढावैराग्यव्याघ्रपालकाः ॥ तेकै
वल्यमहालक्ष्मीक्रोडेक्रीडंतिपंडिताः ॥ ८४ ॥ शमादिसाधनै
र्हीनेदेशिकेंद्रःपराङ्मुखः ॥ तस्मिन्पराङ्मुखेमोक्षलक्ष्मीरपिपरा

ङ्मुखी ॥ ८५ ॥ शास्त्राणिस्वहितायैवसाधनानिप्रशासति ॥
तेषुसत्सुफलंकस्यनस्यादमितसन्मतेः ॥ ८६ ॥ अहोनसाधनै
र्हीनालभंतेकाचखंडकं ॥ अतःसाधनयुक्तेनभवितव्यंमुमुक्षुणा ॥
॥ ८७ ॥ नसाधनविहीनेषुभोगोमोक्षोपिदृश्यते ॥ तेदारिद्रेषुगण्यं
तेनाभौयत्रास्थितिंगतौ ॥ ८८ ॥ भाव्यमेकेनापितत्रयेनमानुष
विग्रहः ॥ सफलस्यान्नचेत्तातनृशुनोःकियदंतरं ॥ ८९ ॥ यथा
श्वाकूपगर्भस्थजलमालोक्यतुष्यति ॥ भोगमोक्षौतथामर्त्योदूरा
न्निश्चित्यतुष्यति॥ ९० ॥ तस्मात्साधनसंपन्नेपुंसितारपरायणे॥
मोक्षलक्ष्मीःसंतनुतेनिवासंश्रीहराविव ॥ ९१ ॥ सत्यंसाधनसंप
न्नःपात्रंस्याद्भोगमोक्षयोः ॥ मादृशांमंदमनसांसाधनंकरुणैवते

॥ ९२ ॥ यःसूचयत्यपूर्वाणिदृश्यानिवचनानिच ॥ तस्यप्रसादो
मोक्षायभोगायापिप्रभुर्मतः ॥ ९३ ॥ त्वांभाग्यशालिनंमन्येयतो
गुरुसदुक्तिषु ॥ विश्वासस्तवनिष्कंपोदुर्लभोयोजगत्त्रये ॥ ९४ ॥
जीवितंकुरुतेभद्रंमृतंकैवल्यमश्नुते ॥ साधुचित्तस्थितिरियंत्वया
सेव्यामनीषिणा ॥९५॥ तत्पांडित्यंसैववविद्यानैपुण्यंतच्चविद्महे ॥
यत्कैवल्यपदारोहविघ्नमूलनिकृंतनं ॥ ९६ ॥ अज्ञातवेदकोवेदो
गुरुरज्ञातवेदकः ॥ अज्ञातवेत्ताशिष्यश्चत्रितयेमिलितेकिमु ॥९७
लोकदृष्ट्यासिद्धवस्तुयद्येषांविषयोभवेत् ॥ लोकदृष्टेः श्रुतेर्वापिप्रा
माण्यंनैवसिध्यति ॥ ९८ ॥ तस्मादलौकिकंतत्त्वंत्वयाज्ञातंमनी
षिणा ॥ तत्रविश्रम्यतिष्ठत्वंतारगर्भेसुखीभव ॥ ९९ ॥ नमस्तारा

यसंसारसारायसरसायच ॥ सर्वानर्थनिबर्हायमहार्हायमहीयसे
॥ १०० ॥ प्राचीनबर्हिराजंचप्रोक्तवान्नारदोयथा ॥ तद्वचःशृणु
पथ्यंचस्निग्धंप्रियतमंचयत् ॥ १०१ ॥ तत्कर्महरितोषंयत्सावि
द्यातन्मतिर्यया ॥ हरिर्देहभृतामात्मास्वयंप्रकृतिरीश्वरः ॥१०२॥
तत्पादमूलंशरणंयतःक्षेमोनृणामिह ॥ सवैप्रियतमश्चात्मायतोनभ
यमण्वपि ॥ १०३ ॥ इतिवेदसवैविद्वान्योविद्वान्सगुरुर्हरिः ॥
एतद्वचोनिरूढस्यकैवल्यंचत्वरद्रुमः ॥ १०४ ॥ इतिश्रीकैवल्यगा
थायांसर्वाश्रमैक्यनिरूपणंनामषोडशोध्यायः ॥

॥ श्री ॥ जयसच्चिदानंद ॥

अस्तिषंढः पुमान्कश्चिद्धस्तपादादिवर्जितः ॥ स्थातुंनगे

हंयस्यास्तिनमातानपितास्यहि ॥ १ ॥ नधर्मंवेत्तिनाधर्मंसर्वधर्म
बहिष्कृतः ॥ कर्मठायंनपश्यंतिसचपश्यतिकर्मठान् ॥ २ ॥ मूढ
वत्स्थितिमापन्नः सन्नसौसर्वतोमुखः ॥ एकेनाक्ष्णासर्वजगत्पश्य
त्यवचनः सदा ॥ ३ ॥ तस्यपत्नीनैकरूपातंवंचयतिनित्यशः ॥
तस्याःस्वभावःकेनापिशक्योवर्णयितुंकिल ॥ ४ ॥ प्रतिक्षणंस्वरूपं
साबिभर्त्यैवनवंनवं ॥ प्रतिरूपंसर्वरसास्पदंनीरसमप्यहो ॥ ५ ॥
मूढायस्यांरमंतेस्मत्यजंतिविबुधाजनाः ॥ भर्तृसान्निध्यमात्रेणसु
षुवेपंचवैसुतान् ॥ ६ ॥ ज्येष्ठस्तस्यावावदूकःद्वितीयश्चपलःसुतः
तृतीयः क्रोधवशगःसर्वदाहैकतत्परः ॥ ७ ॥ चतुर्थस्त्वतिगंभी
रोरसवान्सर्वजीवनः ॥ पंचमःसर्वसहनःछेदंभेदंनवेत्तिसः ॥ तैरे

वरममाणासावहून्पुत्रानजीजनत् ॥ तत्रतस्याः स्त्रयः पुत्राः स्थूलः
सूक्ष्मोप्यनाकृतिः ॥ ९ ॥ प्रथमःफलदाताचद्वितीयःकर्मकारकः॥
तृतीयःसर्वसंहर्ता पुनरुद्भवबीजभृत् ॥ १० ॥ विराड्ढिरण्यजठर
ईशाइत्यभिधाक्रमात् ॥ तत्रप्रथमपुत्रस्यजटरेबहवोद्भुताः ॥११॥
स्वबंधनंस्वयंकृत्वाचीचीकुर्वंतिजंतवः ॥ बंधनारंभकालेषुहा
हाकृत्वापिसर्वतः ॥ १२ ॥ स्वकल्पितप्रमाणेभ्योधर्ममीशंचके
चन ॥ जिज्ञासंत्यस्तिनास्तीतिनिश्चिन्वंतिस्वसंमतं ॥ १३ ॥
प्राचीनबुद्ध्योमानंपराचीनासुधीषुहि ॥ अविच्छिन्नाप्रवृत्तैषायतः
शिक्षापरंपरा ॥ १४ ॥ अशिक्षितमतिर्मानंयदिस्याच्छिक्षयाकि
मु ॥ नवीनापिमतिर्मानंयदिशिक्षानुसारिणी ॥ १५ ॥ एतावता

मूलसिद्धगुरुशिक्षैवतत्वतः ॥ प्रमाणंतत्त्वनिश्चित्यैनार्वाचीनमतिः
स्वतः॥ १६॥ अत्रप्रमादिनःकेचितूशास्त्राणिचपृथकूपृथक् ॥ अकु
र्वंस्तत्रविश्वस्ताअपिसंतिजनाइमे ॥ १७ ॥ विचारयंतिनोकिं
चिदाचार्यः केनशिक्षितः ॥ यद्यसौशिक्षितःपूर्वंशिक्षैवानूदितामु
ना ॥ १८ ॥ अशिक्षितश्चेत्तच्छास्त्रंकथंवामानतामियात् ॥ अ
शिक्षितवच्चोमानंचेत्तदाशिक्षणंवृथा ॥ १९ ॥ सैवशिक्षेतिमन्येहं
विरोधोयत्रकोपिन ॥ विरोधपरिहारायशिक्षालोकेषुसंतता २०॥
तस्माद्विरुद्धशास्त्राणिशिक्षाशून्यानिमन्महे ॥ तत्रापिदृश्यतेश्च
द्धाइदमेकंमहाद्भुतं ॥२१॥ यथामृद्घटरूपेणशरावेणविरुध्यते ॥
अविरुद्धास्वरूपेणसास्थितिःशिक्षितामता ॥२२ ॥ एतादृशास्थ

तौकेचिच्छिक्षिताअविरोधिनः ॥ निर्मानमोहाःसन्यस्ताखिलक
र्माणआसते ॥ २३ ॥ सर्ववादास्पदंविश्वंमिथोविप्रतिपत्ति
धृक् ॥ तथापिसत्यंमन्यंतेइदमेकंमहाद्भुतं ॥ २४ ॥ अन्यो
न्यमप्रसित्धानिरूपाणिदधदद्भुतं ॥ सुंदोपसुंदन्यायेनम्रियंतेय
त्रवादिनः ॥ २५ ॥ तत्रविश्वस्तमतयोनृमृगावादिभिर्हताः ॥
हन्यंतेपिमिथोयत्रमहाद्भुतमिदंपरं ॥ २६ ॥ स्वमतंस्वयमेवे
हसत्यंसंमनुतेजनः ॥ असाक्षिकंसत्यमितिशुक्तीरूप्यायतेन
किं ॥ २७ ॥ समानमतयः केचिन्मिथः साक्षिपदेस्थिताः ॥
दूष्यंतेभिन्नमतिभिरिदमत्रमहाद्भुतं ॥ २८ ॥ आश्चर्यवत्पश्यति
कश्चिदेनमाश्चर्यवद्वदातितथैवचान्यः ॥ आश्चर्यवच्चैनमन्यः शृणो

तिश्रुत्वाप्येनंवेदनचैवकश्चित् ॥ २९ ॥ इत्यर्जुनायभगवान्वादिनां
दुर्दशामिमां ॥ श्रावयामासतत्वज्ञोनिर्विवाददशांविशन् ॥ ३० ॥
द्वितीयस्तनुजस्तस्याएकः सप्तदशात्मकः ॥ नानाविधानिकर्मा
णिकुर्वन्प्रतिगृहंस्थितः ॥ ३१ ॥ स्थूलस्यसर्वमैश्वर्यंदित्सुःकृपण
तांगतः ॥ यद्यत्संपादयेत्तत्तृतीयोग्रसतिस्वयं ॥ ३२ ॥ तद्भोगा
त्पुष्टिमापन्नोयातायातैकतत्परः ॥ नयावन्म्रियतेभोक्ताज्येष्ठोमूढ
तमःप्रभुः ॥ ३३ ॥ कथंसम्रियतेभोक्तायोवस्थात्रयसौख्यभुक् ॥
तस्मिन्मृतेशून्यमेवशिष्यतेनास्तिकश्चितं ॥ ३४ ॥ त्वंशृणुष्व
महाबुद्धेसभोक्ताम्रियतेकथं ॥ यथानशून्यंशिष्येतनास्तिकायेन
वंचिताः ॥ ३५ ॥ कदाचिद्दैवयोगेनतारोपास्तिपरायणः ॥

निमग्नःसच्चिदानंदसिंधौसिद्धदशांगतः ॥ ३६॥ सच्चिदानंदयति
राडात्मारामः कृपाकरः ॥ दृश्यतेनंतपुण्यौघफलभोगदशांदिश
न् ॥ ३७ ॥ तदातत्पादपाथोजमकरंदमधुव्रतः ॥ भूत्वागुंजतित
त्कर्णोपांतेस्वांतस्थदुर्दशां ॥ ३८ ॥ यद्यद्भुनज्मितत्रैवसुखंदुःखा
यतेक्षणात् ॥ यन्नदुःखेनसंभिन्नंतत्सुखंक्वास्तितद्वद ॥ ३९ ॥
सत्यंमुमुक्षुवर्यस्त्वंप्रश्नोयंकठिनः कृतः ॥ कामारिःशंकरोलोके
सुखसंपत्परावधिः ॥ ४० ॥ कामेमृतेदुःखजालंकिमाश्रित्यजिजी
विषेत् ॥ कामजन्यःप्रपंचोयंकामेनैवहिभुज्यते ॥४१॥ शोच्यतेपि
चतेनैवमृतेतस्मिन्क्ववाजगत् ॥ क्वदुःखंक्वचवाशोकःक्वभोगः
क्वदारिद्रता ॥४२॥ शिष्यसेषंढएकस्त्वंसर्वानंदपरिष्कृतः ॥ शब्द

रूपामहामायातयासृष्टमिदंजगत्॥४३॥शब्दंविहायपश्यत्वंक्ववा
ब्रह्मांडमंडलं ॥ यत्रसंतिमहाविद्याअनंताअमितार्थदाः ॥ ४४ ॥
कयाचिद्विद्ययासृष्टंकयाचित्पालितंहितत् ॥ कयाचित्संहृतंभूय
स्तिसृःकाचिच्चबाधते ॥ ४५ ॥ सर्वाअपिचताविद्यागुरुमार्ग
मुपाश्रिताः ॥ सृष्ट्यादिविद्यास्तिस्रस्तुगुह्याद्गुह्यतरास्मृताः॥४६॥
प्रतिकल्पंचसाविद्यालभ्यतेकेनचित्सता ॥ अवांतरास्तुबहुभि
र्लभ्यंतेसंप्रदायतः ॥ ४७ ॥ तयातयाविद्ययाचनंदंतिबहवोज
नाः ॥ प्रपंचबाधनीविद्यालभ्याचरमजन्मना ॥ ४८ ॥
शमादिसंपद्युक्तेनत्रस्तेनजगतोपिच ॥ सद्वृत्तेनविशुद्धेनजन्म
नाकर्मणापिच ॥ ४९ ॥ त्यक्तान्यसंगोत्कंठेनयोभाग्य

परमावधिः ॥ यदग्रेइतराविद्याअविद्याएवकेवलं ॥ ५० ॥
यत्नकर्मसमाप्तिर्नोकथंविद्याभवेच्चसा ॥ विश्वेसमाप्तेकर्मापिका
मोपिचसमाप्यते ॥ ५१ ॥ तस्मिन्समाप्तआनंदखनिरेवभवि
ष्पति ॥ कासाविद्यापरानंदखानिरेवभवाम्यहं ॥ ५२ ॥ यामा
श्रित्यजगत्सर्वंतृणंपश्येयमजंसा ॥ तृणवत्पश्यसित्वंकिंजगदेव
नपश्यसि ॥ ५३ ॥ एतादृशीपराविद्यामहाभाग्येनलभ्यते॥तर्हि
तांदिशमेनाथययामुक्तोभवाम्यहं ॥५४॥ महोपकारंमन्येहंदासो
पिचभवाम्यहं ॥ भविष्यसिकथंदासोजगदेवनपश्यसि॥ ५५ ॥
किमंधोहंभविष्यामिनांधोभवसिसन्मते ॥ विश्वंनैवतुपश्यामि
किमंधादवशिष्यते ॥ ५६ ॥ यथावक्ष्यासिविश्वंनेत्येवंविश्वंप्रप

श्यसि ॥ महाचमत्कारकरींविद्यांतांदेहिमेगुरो ॥ ५७ ॥ किमा
श्वर्यंप्रदास्यामिमाभिन्नहृदयोभव ॥ दातुःप्रतिगृहीतुश्वसौहार्दंफ
लसाधनं ॥ ५८ ॥ उभावपिचमोदेतेविद्यापिचफलिष्यति ॥
त्वमुत्पन्नःकुत्रवंशेकुत्राहंजन्मवान्पुनः ॥ ५९ ॥ सौहार्दंमाव
योःकस्माद्भविष्यतिसखेवद ॥ तर्हित्वद्वंशएवाहंग्रहीष्यामिपुन
र्जनुः ॥ ६० ॥ तदाऽवयोस्तुसौहार्दंनिष्प्रकंपंभविष्यति ॥ तर्हि
विस्मरकल्याणप्राक्तनंसर्वमेवहि ॥६१॥ देशंजातिंकुलंदेहंपितरौ
भ्रातृबांधवान् ॥ स्वप्नोत्थान्गिरिनद्यादिप्रपंचानिवसर्वतः॥६२॥
शिष्यसेत्वंतदावत्सशीघ्रंजागृहिजागृहि ॥ गुरोजागर्मिविश्वंतुस्व
प्नवत्दृश्यतेमया ॥ ६३ ॥ एकोहमेवतिष्ठामिविश्वंपश्यन्निरा

स्पदः ॥ आस्पदंत्वंविश्ववद्दशांचिन्मात्रोसिनिरंजनः ॥६३॥भास
तेत्वयिविश्वंतुमृगवारीविचातपे ॥ सत्यमुक्तंत्वयानाथमयिविश्वं
विभासते ॥६५॥ अहमेवविभामीवभासतेसकलात्मना॥ बुद्धि
मानासिहेवत्सजागर्षिचमदुक्तितः ॥६६॥ धन्योसिकृतकृत्योसिच
रमंजन्मशोभते ॥ वत्सजातोसिमद्वंशोविस्मृताःपूर्ववासनाः ॥
॥६७॥ मद्वंशवासनास्तुभ्यंप्रदिशामिसुखीभव ॥ जगन्नास्त्य
हमेवास्मिप्रकाशभरपूरितः ॥ ६८ ॥ जगंतिभांतिमय्येवमदीय
किरणाइव ॥ विलीनमिवभातीदंमय्येवसंकलंजगत् ॥६९॥ अहं
भामिजगन्नैवइतिमद्वंशवासनाः ॥ सत्यार्थावासनाएताभवबंध
निकृंतनाः ॥ ७० ॥ निधायहृदिहेवत्सभवमद्वंशभूषणः ॥भगव

न्मधुराएतावासनादर्शितास्त्वया ॥७१॥ अधुनैवविमुक्तोस्मिनि
वृतोस्मिचिरायच ॥ त्वयासंभाषणेनैवविमुक्तोस्मिक्षणादहं ॥
॥७२॥ अतःपरंशिष्यतेकातांविद्यांसंप्रदर्शय॥ नकाचिच्छिष्यते
विद्यावासनांताहिसामता ॥ ७३ ॥ संप्रदायैकलभ्यैषागुरुकारु
ण्यहेतुका ॥ यन्नजानेसएवाहंयोज्ञाताज्ञानविग्रहः॥ ७४ ॥
प्रत्यग्रूपोयोहमस्मिसएवपरमः शिवः ॥ इत्यभेदनिरूढश्चेद्धतेप्रत्य
क्परत्वके॥७५॥प्रज्ञानरूपंसंसिद्धंत्वांब्रूतेऋक्श्रुतिःपरा ॥७६॥
अन्नप्राणमनोबुद्धिसुखाख्यंकोशपंचकं॥ भासतेत्वयितत्रत्वंभास
सेरौप्यशुक्तिवत् ॥ ७७ ॥ यथारौप्यंशुक्तिघनंतथैवत्वच्छनंज
गत् ॥सत्यज्ञानानंतरूपंत्वांब्रूतेयाजुषीश्रुतिः ॥ ७८ ॥ अतोहं

ब्रह्माचिद्रूपोवस्थात्रयविवर्जितः ॥ इत्येषावासनानूनंभवबंधनशा गा.
तनी ॥ ७९ ॥ यन्नवेत्तिजगन्मूलंतत्वामित्याहसामगः ॥ वाङ्मा
त्रंजगदित्याहयतोनोत्पन्नमेवहि ॥८०॥ अयमात्मापरब्रह्मावस्था
त्रयविवर्जितः ॥ अवस्थात्रयसंसिित्थइतिब्रूतेपराश्रुतिः ॥ ८१ ॥
एतत्सर्वंसत्यमितितारेणांगीकृतंयतः ॥ अतोवदंतिसर्वेपिवेदा
ॐमितिचांततः ॥ ८२ ॥ एकीभवंतिसर्वेपिवेदाअत्रैवमंत्रके ॥
अतोसौसर्ववेदात्माअत्रवेदाः शमंगताः ॥ ८३ ॥ अत्राविद्याःशमं
याताअत्रवाचोलयंगताः ॥ अत्रकर्माणिनष्टानिअत्रसर्वंप्रतिष्ठितं॥
॥ ८४ ॥ यादुःखमूलंषंढस्यपुंसः संमोहकारिणी ॥ महामायेति
यांप्राहुरनेनैवपलायिता ॥ ८५ ॥ अनेनैवमहामायास्थापितासुख ९१

रूपतः ॥ यामेवव्यक्तिर्ब्रह्मेतिवेत्तिकोपिमहाजनः ॥ ८६ ॥ यस्मिन्
लब्धेमोक्षलक्ष्मीस्तंपुमांसंसमीहते॥ अभोक्ताएकएवात्रशिष्यते
सुखविग्रहः ॥८७॥ रेरेकामसुखंम्रियस्वरुडरेतनैवसाकंव्रजेरेरेलो
भकिमस्तितेविवसतातन्नास्तियच्चिंत्यते ॥ मोहस्यापिकरद्वया
द्विगलितंजालंजगन्नर्तकंवाग्देव्यामदमत्सरौविनिहतौ श्रीदेशिकें
द्राश्रयात् ॥ ८८ ॥ कुत्रास्तेजगदंडमंडलमहोनिःखंडएवास्म्यहं
तत्पिंडंगुरुपादयोर्विनिहितंवाण्याहृतंतस्यच ॥ धन्यःश्रीगुरुराज
एवजयतिक्ष्मामंडलानांगणं फूत्कारेणकरोतिदूरतइमंनेत्रेतुदंतंब
हु ॥ ८९ ॥ यच्चिंत्यतेतदेवेहदीयतेबहुभिर्जनैः ॥ अचिंत्यंदीयते
किञ्चिद्गुरुणैवदयालुना ॥ ९० ॥ चिंतांहरतिनिर्मूलंकर्माणिदह

तिक्षणात् ॥ सुखंददातिसद्विद्यांतस्मैश्रीगुरवेनमः ॥ ९१ ॥ अत्र
न्नेवद्वयंसर्वमपसारयतिप्रभुः ॥ स्थापयत्यद्वयानंदंतस्मै० ॥९२॥
वत्सजातोसिमद्वंशेविस्मृताद्वैतवासना ॥ अद्वैतवासनारूढातस्मा
दोमितिसंस्मर ॥ ९३ ॥ नत्वंनाहंनैवजगन्नभोग्यं नापिभोक्तृता ॥
षंढःपुमांस्त्वमेवासिकैवल्यंनामतेशिवं ॥९४॥ चिंतांत्यजमहाबुद्धे
सैवमायेतिकीर्तिता ॥ तस्यांचंडालकन्यायांत्यक्तायांसर्वतः
सुखं ॥९५॥ प्राप्तंप्राप्तव्यमखिलंदृष्टंद्रष्टव्यमद्भुतं ॥ यत्रश्रीपाद
पाथोजमंतरानैवकिंचन॥९६॥ पुनरेकंमहाबुद्धेशृणुष्ववचनंमम॥
येनात्मारामतानित्यमभिवर्धेतचंद्रवत् ॥ ९७ ॥ प्राणमूर्ध्वंनयत्ये
षोपानंयच्छत्यधोपियः ॥ मध्येवामनआसीनस्तमुपास्वमहा

मते ॥ ९८॥ प्राणस्यप्राणएवैषवाचोवाङ्मनसोमनः ॥ चक्षुष
श्चक्षुरेवैषएषआत्मास्वयंप्रभः ॥ ९९ ॥ विदिताविदितादन्यः
सर्वज्ञःसुखचिद्घनः॥अतिप्रियतमोह्येषएतदर्थमिदंजगत् ॥१००॥
सएवस्वात्मभोगायसंकल्पयतिहृद्गतं ॥ हृद्येवपश्यन्संतुष्टोहृद्येव
नयतेलयं ॥१०१ ॥ हृद्येवतनुतेकर्महृद्येवफलमृच्छति ॥ हृद्येव
शोचत्यानंदंहृद्येवपरिपश्यति ॥ १०२ ॥ हृद्येवस्वर्गनरकगमना
गमनेरतः ॥ हृद्येवदेवंभजतेतत्प्रसादंहृदिव्रजेत् ॥ १०३ ॥ हृद्ये
वमुक्तिमायातिहृदिबंधंछिनत्यपि ॥ एतत्सर्वंमहादर्शप्रतिबिंबवदे
वहि ॥ १०४ ॥ यतोन्यस्यप्रवेशायनमनागपिछिद्रता ॥ नसा
मग्रीकाचिदन्यास्वमृतेतत्रविद्यते ॥ १०५ ॥ कासामग्रीमहादर्शे

प्रतिबिंबेशिलांविना ॥ शिलापिनोपरिणतानप्रविष्टंचबाह्यकं ॥
१०६॥ निमित्तमस्तुचादर्शेबाह्यंत्वयिनयुज्यते ॥ यतोभोक्तैवसर्वंतु
सृष्टंभोग्यंयदुच्यते ॥१०७॥ सामर्थ्यापिचसृष्टैवभोक्ताभोगार्थमेवहि
स्वान्यासामग्रिकाकुत्रस्रष्टव्याकेनहेतुना ॥ अतःस्वयंस्वसंकल्पा
ज्जगदात्मासिहेशिशो ॥ १०८ ॥ तस्मात्सोहंमंत्रराजंजपवास्म
रवाऽववा ॥ प्रणवंवास्मरस्वांतःसंकल्पंत्यजसत्त्वरं ॥ १०९ ॥
कैवल्यंधामसंपन्नमस्मिन्नेवक्षणेशिशो ॥ इमामवस्थांजानंति
सनकाद्यामहर्षयः ॥ ११० ॥ दत्ताद्याअपिजानंतिपरांवायाः
प्रसादतः ॥ भगवन्नद्भुतंजातंक्वमायाक्वचपूरुषाः ॥ १११ ॥
क्वभोक्तारःक्वदातारःक्वसंसारःक्षणादभूत् ॥ कैवल्यमद्वितीयंतु

ब्रह्मशब्दातिदूरगं ॥ ११२ ॥ अहंशब्दसमीपस्थमानंदघनमाप्त
वान् ॥ गुरुस्त्वंसत्यमेवासिस्वरूपंमेसमर्पितं ॥ ११३ ॥ अयत्न
सुखमेवास्मिसंप्राप्यंकिमतःपरं ॥ अज्ञेयंसंपरिज्ञातंज्ञातमित्य
पिभाषितुं ॥ ११४ ॥ लज्जांवहतिमेचेतःकीदृशीवाकलातव ॥ ब्रुवतै
वहृतंविश्वंकिंदास्येतवपूजने ॥ ११५ ॥ आत्मानमर्पयाम्यद्यहंसः
सोहमितिस्मरन् ॥ तदैक्यमोमितिज्ञात्वानिःसंधिःसंस्थितोस्म्य
हं ॥११६॥ संतृप्तःस्वपिमिस्वस्थस्त्वत्कृपामंचकेगुरो ॥ इदमालिंग
नंलोकेलब्धंकेनजनुष्मता ॥ तृणायमन्येभगवन्ब्रह्माद्यानंदशी
करान्॥११७॥ कैवल्यधाम्नःशीर्षेस्मिन्नावामेवतरन्नाहि॥११८॥
नरीनर्तिसुखंभूरिकांचिच्छ्रावयसत्कथां ॥ शृणुवत्समहाबुद्धमहा

भाग्यशिखामणे ॥ ११९ ॥ येनतेसुखिनःसर्वेयांतिदृष्टिपथे
शिशो ॥ अधीतवेदवेदांगोयुवासाधुर्दृढांगकः ॥ १२० ॥ यश
स्वीबलवान्भोक्तासार्वभौमोधनेश्वरः ॥ एषएकःसुखीलोकेमानु
षानंदभाजनं ॥ १२१ ॥ यंदृष्ट्वाश्लाघतेसर्वलोकोयंनतिपूर्वकं॥
सोपितंश्लाघतेनित्यंविषयीगानलोलुपः ॥ १२२ ॥ यद्गानलुब्धा
हरिणागंधर्वोमानुषेषुयः ॥ सचापिदेवगंधर्वंश्लाघतेरागलोलुपः
॥ १२३ ॥ यद्गानलुब्धादेवाद्याःकिंमानुषतनूभृतः ॥ सचापि
चिरलोकस्थंपितरंश्लाघतेचिरं ॥ १२४ ॥ चिरस्थानैकरसिको
भोगीविषयलंपटः ॥ सचापिश्लाघतेदेवमाजानजमितिश्रुतं ॥
॥ १२५ ॥ यंसर्वेपिचमन्यंतेजनाअमिततेजसं ॥ सचापिकर्म

देवंतंश्लाघतेसंपदावृतं ॥ १२६ ॥ यत्संपत्कर्मबलतोब्लाढयेति
श्रुतंयतः ॥ सोपितंसहजंदेवमक्षीणामितसंपदं ॥ १२७ ॥ श्ला
घतेभोगरागेणकर्मक्लेशाद्यभावतः ॥ सोपितंश्लाघतेदेवमिंद्रं
सिंहासनेश्वरं ॥१२८॥ यत्संपल्लेशलेशेनतुलिताः सर्वसंपदः ॥
इंद्रोपिश्लाघतेबुद्धिलुब्धस्तंचबृहस्पतिं॥ १२९ ॥ यद्बुध्यातुलि
ताइंद्रसंपदोलेशलेशतः ॥ अव्याहताज्ञंवागीशः प्रजापतिमक
ल्मषं ॥ १३० ॥ श्लाघतेयत्प्रजाव्याप्तंसर्वंब्रह्मांडमंडलं॥ ब्रह्मांड
मंडलाधीशंब्रह्माणमामितौजसं ॥ १३१ ॥ संपदामत्रसीमेतिश्रुत
यः प्राहुरादरात् ॥ किमेतेसुखिनः सर्वेविद्वत्यक्तपरायणाः ॥
॥१३२॥तुच्छबुध्यात्यज्यतेन्यैरन्यैःसंगृह्यतेजगत् ॥ कथंतेसुखिनो

ब्रूहिमृगवारिणिवारणाः ॥ १३३ ॥ यत्रनोरसलेशोपिरमतेरसिकः
कथं ॥ रसआत्मासर्वरसःस्वेनैवपरितृप्यति ॥ १३४ ॥ यदित्वा
दृशपादाब्जमकरंदरसंपिबेत् ॥ दुर्लभंमानुषंजन्मदुर्लभाचमुमु
क्षुता ॥ १३५ ॥ दुर्लभासाधुभिर्वार्तायत्रतृप्तिर्निरंतरा॥ ब्रह्मादि
मानुषांतानितृणानीवपदानिहि ॥ १३६ ॥ निर्भ्रांतिसाधुवार्ताया
मात्माभातिसुखैकभूः॥ किंतरंगेरसःकश्चित्किंप्रकाशोस्त्यलंकृतौ
॥ १३७ ॥ किंसत्ताशुक्तिरजतेकिंसुखंधावतांबहिः ॥ तरंगस्या
लंकृतेश्चशुक्तिरूप्यमृगांभसोः ॥ १३८ ॥ सुखंख्यातिश्चसंस्थाच
वारिहेमादिकंमतं ॥ किंचित्कालस्यविश्वस्यसुखमात्मासनातनः
॥ १३९ ॥ तस्मादात्मारामएवसुखिराजोविराजते॥ममत्वपाशब

द्धानांकिंसुखंकेनकुत्रहि ॥ १४० ॥ त्यक्तैषणानांस्त्राछंद्यसी
मगानांसुखंपदे ॥ निरीहाणांवेदमूर्धवासिनांसहजंसुखं ॥
॥ १४१ ॥ब्रह्मादिमानुषांताःकिंश्रमिणोवर्णितुंक्षमाः॥यतोवाचो
निवर्त्ततेमनोयस्मान्निवर्तते ॥ १४२ ॥ तद्वक्तुंकेनवाशक्यंताद्दि
द्वान्नबिभेम्यहं॥ श्रीगुरोतवपादाब्जसंगमस्यफलंमया ॥१४३॥
लब्धंयेनफलाकांक्षासर्वाविगलिताहृदः॥ गुरुवंशसमुद्भूतस्तृप्ति
माप्नोतिशाश्वतीं ॥ १४४ ॥ शास्त्रसीमाकर्मसीमाफलसीमा
चयत्रहि ॥ नमःकैवल्यनाथायशरणागतबंधवे ॥ १४५ ॥
ब्रुवन्नेवहिकैवल्यंददास्येवमुमुक्षवे ॥ १४६ ॥ ❁ ॥
इतिश्रीकैवल्यगाथायांपुराणपुरुषनिरूपणंनामसप्तदशोऽध्यायः ॥

108

॥ श्री ॥ जयसच्चिदानंद ॥

तृप्तेनासाध्यतेमुक्तिर्नातृप्तेनकदाचन ॥ तस्मात्तृप्तेनचित्तेनकालंन
यमहामते ॥ १ ॥ देवासुरपरीक्षेयंतृप्त्यतृप्तोइतिद्विधा ॥ यथा
तृप्तस्तथादेवोयथाऽतृप्तस्तथासुरः ॥ २ ॥ तृप्तःसंपूज्यतेस्थाने
इतरोभ्रमणातुरः ॥ तृप्तस्तर्पयंतलोकान्भ्रमयत्यपरःपरं ॥३॥ तृ
प्तःकिंनत्यजेल्लोकेनगृण्हीयात्परःकिमु ॥ तृप्तस्त्यजतिदेहाशाम
तृप्तस्तांचवर्धयेत् ॥ ४ ॥ कर्मकांडमतृप्तायप्राहवर्णाश्रमस्थि
तिं ॥ तृप्तायसर्वसंत्यागंप्राहार्थिकमिदंश्रुतिः ॥ ५ ॥ तृप्तःस्वापि
तिलोकेषुविमुखोदृश्यवस्तुषु ॥ मार्जारवदतृप्तोपिजागर्तिजगती
तले ॥ ६ ॥ शास्त्रंभिन्नमतृप्तस्यप्रवृत्तिर्यत्रसर्वदा ॥ तृप्तस्यापिचत

न्द्भिन्नंयत्रस्वापोनिरंतरं ॥ ७ ॥ तृप्तस्यदर्शनंभिन्नंसुखवार्तैव
यत्राहि ॥ अतृप्तस्यापितद्भिन्नंदुःखवार्तैवकेवलं ॥ ८ ॥ अतृप्तो
न्यसुखंद्रष्टुमशक्तःसुखवर्जितः ॥ तृप्तोन्यदुःखवार्तायांकंपते
कोमलांतरः ॥ ९ ॥ सर्वेषामपिमंत्राणामर्थएकः सनातनः ॥
इतियेनचाविज्ञातंसतृप्तइतिकथ्यते ॥ १० ॥ मंत्रभेदादर्थभेदइति
ज्ञातमशिक्षितैः ॥ अतृप्तिहेतुविज्ञानादतृप्तास्तेनरामताः ॥११॥
शास्त्रंनचेत्तृप्तिहेतुः कथंतच्छास्त्रमुच्यते ॥ तृप्तिकामायोपदेशः
पारतंत्र्यंनयुज्यते ॥१२॥ सुखहेतुःस्वतंत्रत्वमितिसर्वेपिजानते॥
परंतुलभ्यतेकैश्चिदुपदिष्टैर्महात्मभिः ॥ १३ ॥ कस्यापिवशताद्वै
तसत्यबुद्धेर्नरस्यच ॥ यद्वशेविद्यतेयत्तुतच्चतस्माद्बिभेतिहि ॥१४॥

भयतृप्त्योरेकवस्तुनिष्ठानैवोपपद्यते ॥ तस्मातृप्तिस्तत्रामित्रयत्र
स्वातंत्र्यमेवाहि ॥ १५ ॥ तत्सत्यत्वंतदैवस्याद्यदाद्वैतंमृषाभवेत्॥
मंत्रभेदस्ततोयस्मादधिकारविभिन्नता ॥ १६ ॥ तृप्तिकामस्य
मंत्रस्तुॐनमः सिद्धमित्यहो ॥ यल्लाभात्सर्वसिद्धिःस्यादाकंठतृप्ति
कारिणी ॥ १७ ॥ सच्चिदानंदरुपायगुरवेतृप्तिहेतवे ॥ द्रोणाच
लनिवासायतृप्तायास्तुसदोंनमः ॥१८॥ सित्थपंचाक्षरीमंत्रस्या
र्थंशृणुमहतरं ॥ श्रुत्वायंतृप्तिमाप्नोषिकल्पांतेप्यविनाशिनी १९॥
यत्समोनास्तिभोवत्सनिगमेष्वागमेष्वपि ॥ योमूर्ध्निसर्ववेदानांभे
दानांमूलकंतनः ॥ २० ॥ यत्सिद्धंसाधनाकांक्षारहितंसाध्यभास
कं ॥ तारैकवेद्यसंसारतारकंतन्नतोस्म्यहं ॥ २१ ॥ यत्सिद्धंसर्व

रूपाणिप्रदर्शयतिपश्यति ॥ नतदृष्टूनत्वादृश्यंतारमात्रंनतोस्म्य
हं ॥ २२ ॥ यत्सिद्धंसर्वंवाग्बीजंवाग्वृक्षफलरूपकं ॥ ज्ञेयाज्ञे
यनिरासेनतारवेद्यंनतोस्म्यहं ॥ २३ ॥ सर्वस्यापिचवाग्रासेः
सिद्धांतोयमुदाहृतः ॥ ॐनमःसिद्धमित्येवनजीवोनजगन्नखं ॥
॥ २४ ॥ ॐमित्येकाक्षरंब्रह्मनमः शब्दोपिजीवकः ॥ तयोरभेदे
वाग्राशिरितिसिद्धंसमासतः ॥ २५ ॥ ॐमित्युक्तेसाधकेनासिद्धं
कैवल्यमक्षतं ॥ नमःशब्दस्तदालंबसूचनायमनोस्थितः ॥ २६ ॥
भेदवादेमिथोनष्टेकैवल्यंतारसंश्रितं ॥ सिद्धमित्याहवाग्देवीनमों
गीकरणार्थकं ॥ २७ ॥ अखंडसिद्धंसद्वस्तुनिर्विकल्पंनिरंजनं ॥
तारवेद्यंपरंब्रह्मतन्नतोस्मिभवामितत् ॥ २८ ॥ अखंडसिद्धंचिद्

स्तुमनोवाचामगोचरं ॥ तारवेद्यंस्वयंज्योतिस्तन्नतोस्मिभवामि
तत् ॥ २९ ॥ अखंडसिद्धमानंदंसर्ववादास्पदंपरं ॥ ताररूपंजग
ज्जीवंतन्नतोस्मिभवामितत् ॥ ३० ॥ यःसिद्धःसर्वरूपेणपरमा
त्मासनातनः ॥ सर्वशब्दासहःस्वच्छोवेदवेद्यस्तमोंनमः ॥ ३१ ॥
परोक्षमपरोक्षंचयत्रैतद्भासतेजगत् ॥ तत्सिद्धंवस्तुतारेणप्रतिपा
द्यनमस्यते ॥३२॥ प्रतिरूपंचयसिद्धंप्रतिनामविभासते ॥ नाम
रूपेपरित्यज्यतारःसिद्धंनमस्यति ॥ ३३ ॥ यस्मिल्लब्धेपूर्णकामः
साधकोसौभविष्यति ॥ तत्सिद्धंदर्शयेत्तारोप्यंगीकुरुनमस्कुरु ॥
॥ ३४ ॥ सर्वेषामपिवेदानांरहस्यमिदमेवहि ॥ ॐनमःसिद्धमित्या
हकैवल्यंपारमार्थिकं ॥३५॥ तंत्राणामपिसर्वेषांरहस्यमिदमेवहि

ॐनमःसिद्धमित्याहकैवल्यंपारमार्थिकं ॥ ३६ ॥ बुद्धिमद्वार्त
यासिद्धंकिमस्तिजगतीतले ॥ ॐनमःसिद्धमित्याहमनुरेषसना
तनः ॥ ३७ ॥ ॐइत्युक्तेयएवेहप्रतीयेतपरःशिवः ॥ तस्मैसिद्धा
यतत्त्वायगुरुवेस्तुसदानमः ॥ ३७ ॥ यत्रयत्रमनोयातितत्रसिद्धा
यशोचिषे ॥ तारोद्घाटितरूपायगुरवेस्तुसदानमः ॥ ३९ ॥
दृश्यंचदर्शनंद्रष्टायएवैकोनिगद्यते ॥ तस्मैसिद्धायतत्वायगुरवेस्तु
ममोंनमः ॥ ४० ॥ द्रोणाचलनिवासायसच्चिदानंदमूर्तये ॥ यति
वेषधरायास्तुनमःकृष्णायवेधसे ॥ ४१ ॥ पंचाक्षरस्यमंत्रस्यरह
स्यंवेत्तिशंकरः ॥ अंबिकावाहरिर्ब्रह्मावसिष्ठाद्यामहर्षयः ॥ ४२ ॥
समाश्रितस्यपुंजन्मसफलंदुर्लभंकिमु ॥ चिंतामणिःकल्पवृक्षः

कामधेनुरयंमनुः ॥ ४३ ॥ सत्यंशौचंदयाभक्तिर्वैराग्यमितिलक्ष
णं ॥ यत्रास्तिदुर्लभंतस्यकिमस्तिमनुसेविनः॥ ४४ ॥ सिद्धस्तो
त्रमिदंयस्तुगुरोर्लब्ध्वापठेन्नरः ॥ सिद्धोभवतिचाल्पेनकालेना
स्मिन्कलावपि ॥ ४५ ॥ गुरुप्रसादोबलवान्नकालोबलव
त्तरः ॥ अत्रमानंशिवःसाक्षाच्छ्रुतिःस्वानुभवस्तथा ॥ ४६ ॥
यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाः प्रका
शंतेमहात्मनः ॥ ४७ ॥ देवाःपरोक्षताप्रीताः स्वभावोमहतामयं
सहसातत्वकथनंनस्वभावोपिताहशां ॥ ४८ ॥ गुरुभक्तिविहीने
षुस्वभक्तिरहितेषुच ॥ नरेषुपशुतुल्येषुकथंदेवः प्रसीदति ॥४९॥
प्रसन्नेदेवदेवेशश्रीगुरौतत्ववेदिनि ॥ आतृप्तितत्वकथनंसफलंभ

क्तिभाजिनि ॥ ५० ॥ ज्ञातेतत्वेतत्प्रसादात्किंफलंतृप्तिमंतरा ॥
इयमेवपरासिद्धिश्वरमांतिमजन्मनां ॥ ५१ ॥ पश्यतृप्ताहरि
र्ब्रह्माशंकरः श्रीपरांबिका ॥ सिद्धांतशिखरारूढादत्ताद्याश्वमहर्ष
यः ॥ ५२ ॥ सिद्धांतोयैर्नविज्ञातस्तृप्तिंयास्यंतितेकथं ॥ हृद्दारि
द्र्यंकथंतेषांनिवर्तेतचिरंतनं ॥ ५३ ॥ तस्मात्तृप्तामोक्षभाजःसि
द्धांतज्ञाविचक्षणाः ॥ दैवींसंपदमारूढागुर्वाज्ञामार्गचारिणः ५४॥
तस्माद्गुरौहरौभक्तिमंगीकृत्यभवंतर ॥ नताभ्यामंतराकोपिसिद्ध
पंचाक्षरींविदेत् ॥ ५५ ॥ श्रीगुरुंबुद्धिदातारंमन्यंतेसकलाजनाः॥
तमेवेशंप्राहदेवीगायत्रीसर्वसंमता ५६ तस्मात्तत्पादपाथोजमकरं
दरसंपिबन् ॥ सिद्धपंचाक्षरींमंत्ररहस्यंलभतेनरः ॥ ५७ ॥ ॐ

 

मित्येकाक्षरंब्रह्मतदेत्रनमउच्यते ॥ यस्मात्तस्मैसर्वकामानमंतीति
यजुःश्रुतिः ॥ ५८ ॥ असाध्यंसर्वथानित्यसिद्धत्वात्सिद्धमुच्यते ॥
तस्मातदोंनमःसिद्धमुपास्यंज्ञेयमेवच ॥५९॥ ॐकारेणाविचालि
त्वंनमःशब्देनसाक्षिता ॥ सिद्धशब्देनलब्धत्वंमनुराहसनातनः ॥
॥ ६० ॥ नैतन्मंत्रसमःकोपिमंत्रोस्तिजगतीतले ॥ कामधेनुःक
ल्पवृक्षइवतृप्तिकरःपरः ॥ ६१ ॥ नश्रोतव्यंनमंतव्यंनज्ञातव्यं
चकिंचन ॥ शिष्येतास्मिन्मनौलब्धेनभोक्तव्यंचकिंचन ॥ ६२ ॥
एतद्विज्ञानसिध्यर्थंप्रवृत्ताह्यक्षरावली ॥ सावेदादिस्वरूपेणचैतदंता
वसीयते ॥ ६३ ॥ नमस्तेगुरुनाथयपाठितासकलाश्रुतिः ॥ पंचा
क्षरमिषेणैत्रनिमेषोद्घाटनंकृतं ॥ ६४ ॥ पदत्रयेणयस्मात्वंव्याप्य

तिष्ठसिहेगुरो ॥ त्रिविक्रमोसिभगवन्नूपादयोरस्म्यहंबालिः ६५ ।
गुरोःसदनमासाद्ययेनकेनवपुष्मता ॥ संपादितःप्रसादश्चेत्तंमन्ये
भाग्यशालिनं ॥ ६६ ॥ गुरोरपिगृहंगत्वाधिक्कृत्यैवनिराकृतः ।
पशोःपशुतरंमन्येतंनरंत्वपरंखरं ॥ ६७ ॥ कृपादृष्टिर्द्वयोर्दृष्टागुरौ
मातरिचानघा ॥ तत्रतीर्थैनरःस्नात्वैवाक्षयंसुखमेधते ॥ ६८ ॥
सुखंस्वापयतेमातासुखंस्वापयतेगुरुः ॥ नान्यःकश्चित्सुखस्वाप
क्रमंवेत्तिद्वयंविना ॥ ६९ ॥ द्वावेवपोषकौलोकेइतरेशोषकामताः ॥
भोगेनमाताज्ञानेनगुरुःपोषयतेशिशुं ॥ ७० ॥ पुनःशृणुमहाप्राज्ञ
कृतंपथ्यंचमेवचः ॥ यज्ञानेनभवेत्पुष्टिःकैवल्यारोहणक्रमे ॥ ७१ ॥
षाड्विधानिदरिद्राणियस्यनष्टानिबोधतः ॥ सकैवल्यंपदारोहाधि

कारीश्रीगुरोःसुतः ॥ ७२ ॥ केनमानेनसंसिद्धौहर्षशोकौवदाशु
मे ॥ कस्तयोर्विषयःसिद्धः कथंवासंस्थितौहितौ ॥ ७३ ॥ नाकिं
चित्तत्रमानंतुपशुदृष्टिमृतेऽकृतं ॥ कथंमृगजलाभेऽस्मिन्नसत्यबुद्धि
मृतेहितौ ॥ ७४ ॥ इयमेवपशोर्दृष्टिर्यादृष्टंमनुतेहठात् ॥ नाविचा
रविशालत्वंतत्रैवैतौस्थितिंगतौ ॥ ७५ ॥ षडिमेरिपवोयेनजिताः
कामादयःशठाः ॥ गुरुदत्तपदारूढोमुक्तोदैवेनजायते ॥७६॥ षडि
मेरिपवोयेनजितास्तेनजगज्जितं ॥ गुरुदत्तपदारूढोमुक्तोदैवेनजाय
ते ॥७७॥ गुरुदत्तपदंतत्तुयत्रकिंचिन्नविद्यते॥कैवल्यधामतद्विद्धिन
चिंत्यंनापिचिंतनं ॥७८॥ यःसेवामनपेक्ष्यवीक्ष्यशरणांयातंमुदैका
क्षरंवेदानामखिलात्मनांहृदिदृढंगाढंनिगूढंरसं ॥दत्तेदास्यतिदत्तवा

न्निजपदांभोजाश्रितेसज्जनेतस्मैश्रीगुरवेदयार्द्रवपुषेभूयात्सदामंग
लं ॥७९॥ वत्सतुष्टोस्मितेबुध्यावाचस्तुष्यंतिमामकाः ॥ हृदयेतव
तिष्ठंतुन्चिरंजीवसुखंवस ॥८०॥ काक्षुच्छब्दात्मकेविश्वेकाक्षुदात्म
निचिद्रसे ॥ नित्यलब्धेपरानंदेतृप्तिरेवावशिष्यते ॥८१॥ किंवातृप्त
स्यकर्तव्यंजगद्विस्मरणंविना ॥ तच्चस्वयंभवत्येवजाग्रतःस्वप्नव
च्छिशो ॥८२॥ दुर्लभौश्रीगुरोःपादौनमोक्षोवतदुर्लभः॥ यतस्तत्पा
दपाथोजमाश्रित्यैवप्रातिष्ठितः॥८३॥वाक्शक्तिर्बोधगगनेशिवक्रीड
तिसाशिवा॥तामालिंग्यदृढंशेतेस्वानंदसुखमद्वयः ॥८४॥पश्यक्री
डाशमंयातिसामरस्यंचजृंभते ॥ कोबोधोस्तिविनाशब्दंकःशब्दो
वोधमंतरा ॥८५॥ बोधःशब्दइतिब्यक्तंवक्तुंशक्नोतिकोनरः ॥गतौ

तौशब्दबोधाख्यौजगद्रूपधरौनटौ ॥८६॥ कैवल्यधाम्निसंलीनौत
यासहमयासह॥आवयोःसंगमस्यैतत्फलंयत्सहजंसुखं।८७।विश्र
म्यतामत्रवत्सना।त्रकिंचनविद्यते ॥ भाषणंबहुसंजातंमयापिचवि
रम्यते॥८८॥ प्रणवाक्षररूपायैशिवायैसततंनमः॥ तदेकज्ञानवित्ता
यशिवायसततंनमः॥८९॥तत्सामरस्यवित्तायगुरवेस्त्वस्तिमेसदा॥
तत्पादपद्मरजसास्नातेभ्योप्यस्तुमंगलं ॥९०॥ कैवल्यगाथेदोग्धि
त्वंशांतदांतनिजंरसं॥येनतुष्येच्छ्रीगुरुर्मेनिरामिषदयाकरः ॥९१॥
इति श्री कैवल्यधामनिवासि कृष्णानंदविरचितायांकैवल्यगाथायां
निर्वाणपदवीनामाष्टादशोध्यायः ॥१८॥ श्री ॥ जयसच्चिदानंद ॥



श्रीकाश्यां हितचिन्तक यन्त्रालये मुद्रितं ।

